उन्मुक्तः ( प्रसारितः ) वायुर्येषु तानि । प्राकृतस्थलानि उद्यानतडागादीनि, परिमुच्य विहाय । प्रचण्डं राजानमागतं वीक्ष्य यथा लोका निलीयन्ते, तथेहापि सर्वे गृहे गुप्ता भवन्ति । शीतोचितवस्त्रावेष्टितैर्नरैरिव, महीजैर्वृक्षैरपि पिण्डीकृतभावेनेव ( आकुञ्चितसर्वावयवत्वेन ) भूयः अधिकं स्थीयते । शीते वृक्षाणां संकोचात् । भूमा महत्त्वम् । किं न क्षिपते, अपि तु क्षिपत एव । वायुः । यद् वीराणां धूमायितभावः ( पराक्रमगर्वः ) बहिर्निस्सार्यते । शीतेऽपि, पवनाडिनां मुखाद् धूमो बहिर्निस्सरति । (गर्वस्य धूमत्वेनोत्प्रेक्षणं भाषायामपि प्रसिद्धं 'कुछ धूआं हो तो निकाल दूं') । सर्वेषां ऋतूनां मध्ये ( निर्धारणे ) । हिममहिमागमतः तव महिमा महीयते श्लाघ्यत इत्यर्थः । ऋतूनां मध्ये सर्वत्र माहात्म्यमधिकमित्यर्थः । अथ वा सर्वेषां ऋतूनामग्र एव हिमागमो जातः ( 'पाला मार गया' ) पराजिताः सर्वे इत्यर्थः । तेन तव महिमा श्लाघ्यते । महिमा-महिमा-आसाः ॥ ७० ॥

---

## ॥ शीताधिक्यम् ॥

हिमकणवाहा वेगवन्तो गन्धवाहा यान्ति,
व्याप्ता वारिवाहावलिरातपनिरासिनी
गगननिरीना परं कम्पते विनीता प्रजा
हिमभयभीता भूरि भवननिवासिनी ।
मञ्जुनाथ मन्दीकृतवह्निविधाने क्षणं
मन्दीभूतजाड्याऽपैति विहृतिमन्दासिनी
सा किं शीतबाधा लोकसाधारणसखा, ? न चे-
त्संगमनुबाधा फलमायासद्विलासिनी ॥ ७१ ॥

हिमकणवाहिन गन्धवाहा (वायव 'रूढिर्योगापहारिणी')। आत-पतिरोधायिनी धारिवाहावलि मेघमाला। भूरि यथा स्यात्तथा हिमभय-भीता। विनीता दीना। मन्दीभूत आस्यं (अङ्गानां जडता) यस्याः सा। उदासयति तटस्थान्करोति सीमेत्यर्थः। णिजन्तादासेर्णिनि। विकृति शीत-बाधा क्षणमर्पयेत। सगमे सुसाधा सुलभा। विलासिनी यदि यत्र न आधास्यत् उष्णतासम्पादनेन बलं न अस्थापयिष्यत् तर्हि किं शीतबाधा साधारणलोकसहा स्यात्, अपि तु नेत्यर्थः। 'योताप्यो'रिति लृङ्विकल्पा-लिङ्। किं वा 'आदध्यात्' इति लिङ्स्थाने क्रियातिपत्तिविवक्षया लृङ्। सर्वथा विवक्षामाश्रित्य लिङ्लृङौ व्यवस्थापनीयाविति तत्परमिकैरवल सुध्या ॥ ७१ ॥

भूमिर्भाति भूरितरशीता, व्योमखण्डमिदं
शीतातिशयेन हिमवर्षामवलम्बते
वान्ति कम्पयन्तो भूरिशीता मरुतोऽमी भृशं
शीताधिकरुद्ध्या वारि दंष्टुमारम्भते।
कुञ्झटिकाव्याजाद्दिक्षु शीतस्येव मूर्तिर्भाति
किं बहुना वह्नावपि शैत्यं जातु जृम्भते
शिशिरवशेन यान्ति परिभवमन्ये गुणा
मन्ये शीतमात्रस्यैव राज्यं परिजृम्भते ॥ ७२ ॥

शीतान् कम्पयन्त दष्टुमारम्भते दशने प्रतिद्वन्द्वतीत्यर्थः ('पानी काटने दौड़ता है' एव भाव।) कुञ्झटिकाया: (कुहासा—कोहरा) व्याजात्। मूर्तिर्विग्रहम्। शैत्य जृम्भते सानितम्भुदेति, यद्यपि तयोरन्यो न प्रतायते। अतएव हलेन स गृहमावाति भाव। अन्ये तारतम्यादयो गुणा परिभव मन्दतां यान्ति। परिजृम्भते उत्कर्षं एवते ॥ ७२ ॥

## —॥ शिशिरे वियोगी ॥—

वारं वारमुल्लोलति हृदयविकम्पकरी
शीतानिललहरी हि तुहिनपुरस्सरी
उष्णोच्छ्वासकोष्णीकृततूलिकातलेऽपि नैति
निद्रा यत विद्राणेव संगमसुखाकरी ।
मञ्जुनाथ चञ्चति न चिन्ताततिरन्तरतो
दृश्यते समन्ततोऽपि सैव भावनाचरी
पार्श्वपरिवर्तननिवर्तनविवर्तशतै-
र्व्यथयति वियोगिनोऽद्य शिशिरविभावरी ॥७३॥

हृदयकम्पकरीति, 'कृञो हेत्वि'ति टः । तुहिनस्य (हिमस्य) पुरस्सरी अग्रतो गामिनी । हिमसहकृतेत्यर्थः । 'पुरोऽग्रतोऽग्रेषु सर्तेः'रिति टः । शीतपवनलहरी मुहुर्मुहुः उल्लोलति उद्वेलं चलति । अत्र शीमावायं हो उल्लपधातुर्भवादिगणे-देशाकृतिगणपाठादुन्नेयः । लोट् उन्मादे, अत्र वा लडयोरैक्यस्मरणोत्संनोह्यम् । उल्लोल इवाचरतीति आचारक्विपा वा कार्यं निर्वोढव्यम् । उष्ण निः-श्वासेन ईषदुष्णीकृतायाः तूलिकायाः (तूलपूर्णं प्रावरणम् 'रजाई') तलेऽपि निद्रा न एति । स्वप्रियासंगमेन, सुखाकरी (अनुकूलवेदनाजनकरी) 'सुखप्रियादानुलोम्ये' टाप् । निद्रा विद्राणेव, निद्रितविषया पलायितेव । 'द्रा कुत्सायां गतौ' । 'संयोगादेरात' इति निष्ठानत्वम् । अन्तरतो हृदयात् । न चञ्चति (न अपसरति) । भावनायां चरतिइति भावनाचरी, चरति हृदये भा-वयति सा । चरेष्टः । सा नायिकैव समन्ततो दृश्यते । पार्श्वस्य परिवर्तनम् ('करवट' बदलना) पुनस्तस्य निवर्तनम् (त्यागः), एवंविधैर्विवर्तशतैः आवृत्तिशतैः । व्यथयति व्यथयति ॥ ७३ ॥

---

## —※ शीतं प्रत्युपालम्भः ※—



सहजसुगन्धगुणसिन्धुं पद्ममर्दयसे
सौरभसुबन्धुं किञ्च पाटलां दलयसे
शीतलसमीरैर्मञ्जुमल्लीमवमर्दयसे
यूथिकामतल्लीमपि निःसहं व्यथयसे ।
मञ्जुनाथ सेयं गुणवैरिताऽपि मर्षिता ते
क्षुद्रतामथापि बत दारुण ! कलयसे
हंहो दुर्विनीत कथमेतत्सहनीयं शीत !
यत्त्वं वीतगन्धानपि कुन्दान् कन्दलयसे ॥७४॥

हे शीत ! त्वं, सहजस्य सुगन्धगुणस्य सिन्धुम् (आकरम्) कमलम्, अर्दयसे मर्दयसि । शीते कमलनिर्लोपात् । 'वा पुंसि पद्म'मिति यदि पद्मस्य पुंस्त्वं कदाचिदाशास्महि, तर्हि तस्यैवंविधोऽवकाशः (सिन्धुं बन्धुम् इत्यनुप्रासपूरकः) अन्यत्र तु न स्यादित्याग्रहतः प्रायोक्ति । सौरभस्य सुबन्धुं सुहृदम् । पाटलां दक्षिणदिशि प्रसिद्धं काचस्थालीपुष्पम् (ग्रामेषु पाटलशब्देन प्रसिद्धं 'गुलाब' पुष्पं वा) । मल्ली मल्लिका ('बेला'), नामैव तस्याः 'शीतभीरु'रिति । यूथिकामतल्लीम्-प्रशस्तां यूथीम् । तव गुणवैरिताऽपि मर्षिता, गुणविद्वेषोऽपि सोढः । क्षुद्रताम् तुच्छताम् । वीतगन्धान् । कन्दलयसे विकासयसि । मर्षयित्रिनोऽद्भुतबुद्धेः स्वामिनोऽन्योक्तिविधया व्यज्यमानो वृत्तान्तरमार्मिकेषु पुनरभिगमाय इत्यलम् । सर्वेऽपि प्रासाः अनुपमन्यासाः ॥ ७४ ॥

## शीतस्याभिनन्दनम्

निभृतनिकुञ्जकेलिसदने समिद्धसुखं
  स्थीयते निबद्धरसालापमतिनिर्भरे
केसरसुगन्धमतिमादकममन्दमाप्य
  शयनमुदेति मृदुतूलसुखसंस्तरे ।
नूनमृतुराजमपि निर्भरमतीतमहो
  प्रियवर शीत ! गुणमेवं समुदाहरे
पीवरसुरोजयुगमुरसि निधाय मम
  सुन्दरसरोजमुखी शेते भुजपञ्जरे ॥ ७५ ॥

अतिनिर्भरे सिद्धाम्बरतुभिः पूर्णे, निभृतनिकुञ्जस्य केलिसदने। समिद्धसुखम् ( वर्धीयमानानि सुखानि यस्मिन्कर्मणि यथा तथा ) निबद्धो रसपूर्णआलापो यस्मिन्कर्मणि यथा स्यात्तथा च स्थीयते। अन्येषु ऋतुषु रसालापोचिता ईदृशी निभृतपरिस्थितिर्न भवतीति भावः। काश्मीरस्य अतिमादकं गन्धम्, अमन्दं यथा तथा आ–आप्य! मृदुले तूलस्य सुखकारके आस्तरणे शयनं भवति। अन्येष्वृतुषु मधुरत्वं शारीरिकपार्श्वं न भवति। ऋतूनां राजानं वसन्तमपि निर्भरमत्यन्तं अतीतम् उल्लंघितवन्तम्, वसन्ततोऽप्यतिशयितम्। समुदाहरे उदाहरणरूपेण वर्णयामि। चतुर्थे–पीवर सुन्दर सरोज सरोज, प्रासाः ॥ ७५ ॥





# नवरसवीथी

—मङ्गलसोरठा छन्दः—

अकलितकलनाकारु, कुण्डलिमण्डनमण्डितम् ।
दलदिन्दीवरचारु, चरणयुगं सुखयतु सदा ॥ १ ॥

अन्यैर्दैवैः अकलितायाः घटनायाः कारु, शिल्पि । अन्यकविकोटैरगु-म्फिताया रचनायाः परिचयोऽपि तच्चरणयुगसेवानुभाव इति अग्रेतनीं रचना-मारभमाणानामप्यनेन ध्वनयति ॥ १ ॥

---

## —शृङ्गारः—

—सोरठाछन्दः—

रतिस्थायिकोऽगायि, नायिकादिजनितः शुचिः ।
दृक्क्षेपाद्यनुयायि,-चिन्तादिकसंचारिकः ॥ २ ॥

रतिः स्थायिभावो यत्र, नायिका (नायक)दिभिः (विभावैः) आल-म्बित', नायिकाद्यालम्बनक इत्यर्थः । दृक्क्षेपादयः (कटाक्षादयः) अनु-भावा यत्र ईदृशश्च, चिन्तादिक. संचारी यत्रैवंविधोऽस्ति शृङ्गारः । शुचिः शृङ्गारः कथ्यते प्रोक्त. ॥ २ ॥

### ॥ तत्र पूर्वं नायिकाः ॥

### तत्रापि पूर्वं पूर्वानुरागे—

### —॥ मुग्धा ॥—

नयनविलोक एव हृदयनिलीनं प्रियं
जानती न मौग्ध्याद् हृदयं च कुचबन्धुरम्
ताम्यति नवीनरोमरेखया सहैव जात-
मेषा विदती न मानसस्य महदन्तरम् ।
सपदि सुमञ्जसुरतसदनेऽपि मञ्चगता
मानसिकभावैः श्रिता पञ्चशरपञ्जरं
अधुनाऽनधीननवनायके निलीनमना
दूयते नवीनमीननयना निरन्तरम् ॥ २ ॥

नयनाभ्यां विलोके दर्शनमात्रे एव हृदये निलीनं प्रियतमम्, नवोद्गताभ्यां कुचाभ्यां बन्धुरं मनोहरं स्वस्य हृदयं च मुग्धत्वात् न जानाति । तथा नवोद्भिन्नया रोमावल्या सहैव जातम्, मानसस्य महदन्तरं न विदती, एषा ताम्यति खिद्यति । पूर्वं पुष्पक्रीडादिषु स्थितमासीत्, इदानीं तु प्रियविषयकवार्तासु मनो रमते इति । महदन्तरं रोमावल्युद्भेदेन [ यौवनोद्गमेन ] सहैवाऽऽयातीति भावः । कुसुमैः आस्तरणपुष्पाधारादिमण्डिते सुरतसदने मञ्चगताऽपि । मनोविकारैः कामबाणशरैः स्थिता । प्रियतमविरहव्यथा ज्वरेण पीडितेति भावः । अनधीने स्त्र्यादीनां पराधीने, अत्र नायके आसक्तमनाः । नवीना मीननयना ॥ २ ॥

---

## स्वाधीनपतिका

मामेवाऽनुमोदयन् करोति वेषभूषादिकं
मामेवाऽनुमान्य वस्तु किञ्चिदुपनीयते
मामिह विहाय न प्रयाति बहुकालं बहि-
र्मामेवावलम्ब्य तेन दिनमतिनीयते ।
मञ्जुनाथ तिर्यगवलोकनतोऽप्युद्विजते
किञ्चिद्भ्रूविभङ्गतोऽपि काममनुनीयते
प्रेयसोभिमाने सखि ! कथमु वसन्ति स्त्रियो ?
हन्त मम मानेऽप्यवकाशो नाभ्युदीयते ॥ ४ ॥

अनुमोदयन् अनुसरन् । मन्मनोऽनुसारमेव आत्मनोऽपि शृङ्गारादिकं रचयतीति भावः । मामेव अनुमान्य मामेव अनुमतां कृत्वा। किञ्चिद्वस्तु आनीयते । अतिनीयते याप्यते । भ्रूपक्ष्मीकरणेऽपि तेन कामं यथेच्छम् । अनुनीयते अनुनयः क्रियते, भावे प्रत्ययः । प्रेयसा कृतेऽभिमाने, प्रेयसि रुष्टे इत्यर्थः । प्रेयान् मत्तो रुष्टो भवेदिति तु का कथा, परं ममापि मानस्यावकाशो न अभ्युदीयते आगच्छति । तथाऽयं ममानुवर्तते, यथा मम अन्यनागरीदर्शनेन मानेच्छायां सत्यामप्यवकाशो न प्राप्नोतीति भावः ॥ ४ ॥

---

## वासकसज्जा

विरचितकुसुमहारसौरभसुभगतमे
ताम्बूलोपहारमसौ सदने समीक्षते
वातायनसन्निधौ च तल्पं कल्पयित्वा स्वयं
निद्रयमनल्पं सखीलोकात्परीक्षते ।

मधुनाथ सामोदं विरच्य वरवेषमियं
द्वारदेशमानर्तितनयनमुदीक्षते
अवसितमण्डनापि रतिसदनाभिमुखी
काचिच्चारुचन्द्रमुखी मुकुरमवेक्षते ॥ ५ ॥

विरचितानां कुसुमहाराणां सौरभेण सुभगतमे अतिमनोहरे । दयिताय देयं ताम्बूलोपायनं समीक्षते पश्यति । स्वयं सद्यं कल्पयिष्येत्यनेन परिजनादपि गोपनं ध्वनितम् । सखीजनात् अनल्पं निह्नवं अतिगुप्ततां मुपरीक्षते । सख्यः पश्यन्ति नु नेति तासां सकाशात्सर्वं गोपायन्तीत्यर्थः, पश्चात्सामेतद्वर्ं परिहसेयुरिति भावः । वरम् उत्कृष्टतमं वेषम् । विरच्य कृत्वा । निधः पार्श्विकतया न भप् । आनर्तितनयनं यथा तथा प्रियमनीक्षायां द्वारदेशमुदीक्षते । अवसितमण्डना समापितशृङ्गारा अत एव केलिभवनाभिमुखी अपि काचिच्चन्द्रमुखी दर्पणमवेक्षते । शृङ्गारे कापि त्रुटिस्तु नास्ति किंवा, अथ कथं वा प्रियमनोमोहकं मे शृङ्गारमस्तीति अनावश्यकत्वेपि सौन्दर्यगर्वादेवं वीक्षत इति भावः । मध्या च सेयम् ॥ ५ ॥

---

## अभिसारिका

रूपकघनाक्षरीच्छन्दः

दूरमवमोचितमनोज्ञमणिमञ्जीरक-
मथ परिमोचितमुखरमेखलं प्रयाति
चकितं चतुर्दिक्षु परिपश्यन्ती विनम्रमुखं
साध्वसमयन्ती जने दृष्टिपथमुपयाति ।

मञ्जुनाथ संकोचं वहन्ती पदशब्देनापि
प्रीतिमियमङ्गीकृत्य साहसे पदं दधाति
मेचकनिचोलगुरुगोपितकपोलयुगा
सेयं नीलचोलवृता तन्वङ्गी तिरोदधाति ॥ ६ ॥

दूरम् अवमोचितौ मनोज्ञौ मणिमञ्जीरकौ (नूपुरौ) यस्मिन् कर्मणि यथा तथा, परिमोचिता मुखरा (किङ्किणीशब्दकारिणी) मेखला यस्मिन्कर्मणि तथा च। प्रयाति अभिसरति। विनम्रं मुखं यस्मिन्कर्मणि तथा। जने दृष्टिपथम् आगच्छत्येव साध्वसम् भयन्ती, भयं प्राप्नुवती सती। 'हट किट कटी' इति प्रसिद्धात् शाता। निजपदशब्देनापि संकोचं वहन्ती, सेयं भीरुः, प्रेमपथमङ्गीकृत्य, घनतमसि अभिसरणरूपे साहसे पदं स्थापयति। मेचकनिचोले श्यामे प्रच्छदपटे, अतिगोपितं कपोलयुगं यया। कपोलयोश्चन्द्रवद्धवलतायाः स्पष्टता भवेदिति नायिकायाः सौन्दर्यातिशयो ध्वन्यते। नीलचोलकावृता तिरोदधाति निलीयते। चतुर्थे चोल चोल चोल प्रासाः श्रेयसः॥ ६॥

---

—॥ विरहोत्कण्ठिता ॥—

---

प्रायः पूर्वयाम एव रात्रेरयमेति गृहा-
नद्य दुःसहाऽसावद्धरजनी व्यतीयते
म्लानः पुष्पहार एष, भूषा भूरिभार इयं
नानाविधचिन्ता मे समन्तादुपचीयते।
मञ्जुनाथ कञ्जदृशा दत्तदीर्घनिश्वसितं
दूयमानयैवं सखी दैन्यादभिधीयते
दृष्टिं विनिधाय मार्गवातायने निरङ्कुशं
नयने प्रमृज्य हन्त शयने निलीयते ॥ ७ ॥

मञ्जुनाथ संमुखमुपागतेऽपि मन्दपदं
दयिते, न किञ्चिदपि वाचमियं संजहौ
सलिलभरेण रुद्धनयनसरोजयुगा
मञ्जुलमृगाक्षी दीर्घनिःश्वासं शनैर्जहौ ॥ १० ॥

अलसा अङ्गलता यस्मिन् कर्मणि यथा स्यात्तथा, मन्दमन्दं चलनमसहमानौ पादौ भुवि निदधानः, रात्रिजागरणेन उपरक्ते नेत्रे, सपत्न्या अङ्गरागेण अरुणौ, अतएव मञ्जिमाऽऽढ्यौ बाहू च, सविलक्षं सलज्जं वहन् प्रेयान् (प्रियः) प्रातः पासमयनं निजकेलिगृहमयासीत् । संकोचेन मन्दपदं यथा यथा, संमुखागतेऽपि दयिते किञ्चिदपि वाचम्, इयं (नायिका) न संजहौ, किञ्चिदपि नोवाचेत्यर्थः । किन्तु—॥ १० ॥

---

—॥ उत्का ॥—

---

भवदुपलक्ष्यमानसंकेतं समधिगम्य
नियतनिकेतं नीयमाना सा प्रसीदति
एवं व्याहरेयं पुनरेवमाचरेयं चेति
प्रचुरं मनसि चिन्तयन्ती हन्त सीदति ।
मञ्जुनाथ समयविलङ्घनेन खिन्ना चिरा-
त्क्षामं मदनेन दूयमाना सा विषीदति ।
पर्यङ्के प्रयत्नपरिरचितेऽनुतप्ता भृशं
शङ्के फुल्लपङ्केरुहनयना निषीदति ॥ ११ ॥

नायकं प्रति दूत्या उक्तिः । भवता सूच्यमानं संकेतं ज्ञात्वा, नियतं निकेतं (स्थानम्) मञ्जुना नीयमाना सा भवदागमनाशया प्रसीदति । एवं विव-

तस्मै समागते एवं संश्लेषयेयम्, एवं च संगमचातुर्यं दर्शयेयम् इति बहु विचारयन्ती सीदति, परिश्रान्ता भवति । कामपीडिता सा पाषाणफलके कुसुमैः रचिते पर्यङ्के भृशमनुतप्ता सती सांप्रतं तिष्ठतीति अहं शङ्के । अत एव न तस्या औत्कण्ठ्यं विफलनीयमिति भावः ॥ ११ ॥

---

→※ वृत्तसुरतगोपना गुप्ता ※←

सायमवकाशमुपलभ्य गृहकार्यभरा-
त्कुसुमचयार्थमुपयाता भयभुग्नाऽहम्
परिमृदिता मे तरुलग्ना पश्य शाटिकाऽसौ
वृक्षवाटिकायां घनतमसि यदूनाऽहम् ।
मञ्जुनाथ कुसुमनिलीनैरनुयाताऽलिभिः
सरभसमायाताऽपि विटपविलूनाऽहं
शङ्कितामलीकं नर्मशाली काममालीजनो
हन्त मधुपालीदत्तदंशा ददूनाऽहम् ॥ १२ ॥

गृहकार्यभरात्, सायमवकाशं प्राप्य । भरपदेन कौटुम्बिककार्यस्य बाहुल्यं स्वकर्तव्यतां च सूचयति, अतएव कार्योत्तरं सायमेवापयाता इति पारवश्येन निर्दोषता व्यज्यते । भयेन भुग्ना संकुचिताऽहं कुसुमचयार्थं वाटिकामुपयाता । पल्लवितेषु तरुषु एषा मे शाटिका, परिमृदिता वलीविलुठिता जाता, न तु छिन्नेति भावः । कथं वृक्षवाटिकायां शाटिका विलग्नेति चेत्— यत् यतः, अहं घनतमसि ऊना एकाकिनी । एकाकिन्याः अन्धकारे भयवशात् शीघ्रं शीघ्रं पुष्पिततरुसमीपगमनेन अनवधानवशाद्विलग्नेत्याशयः । कथं स्थाने स्थाने दष्टानीत्याह—कुसुमेषु निलीनैः रात्रिकारणाद्विपद्यं स्थितैः भ्रमरैः अनुयाता । विटपमाश्रितानां भ्रमराणां सहसा स्थानविच्छेदात्को-

पातिताय इति सुदूरमनुसरणम्। अतएव तेषां भयात्सरभसं चलितापि अहं सपत्नासाभिर्विदलना चिक्षता। भ्रमरभयपलायनाद्मार्गेण पलायनाद्विटपैः शरीरोल्लेख इति भावः। मर्मशाली परिहासशीलः सखीजनः कामं (यथेच्छम् अनेन निर्दोषाया मे न भयमिति सूच्यते) अलीकं मिथ्या यत्किञ्चित् परिहासम्, मधुपानाम् आस्था दष्टौ दंशौ यस्याः साऽहं दृढं मृषा पीडिता। दृढपीडाप्रदर्शनात्साहमधिककालं वक्तुं वा ध्यातुं वा शक्तेति गोपनचातुर्यं व्यज्यते। मर्मशालीत्युक्त्या यदि सखीजनः किञ्चिदन्यथैतदपि परिहासमात्रं परिणंस्यतेति सूच्यते। किञ्च अलीकं मर्मशाली सखीजनः प्रायो अकाण्डमेव परिहासं करोति, अत एव न तत्परिहासे विश्वसनीयमिति व्यज्यते ॥ १२ ॥

---

## —प्रोषितपतिका (विरहिणी)—

पञ्जरशकुन्तैर्नाधिगच्छन्ती प्रमोदं मनाग्
विरहविनोदं वीणयाऽमुं मा प्रसीदति
प्रियगतचित्ता पुनस्तामपि निधाय पृथक्
कामं चिन्तयन्ती हन्त विरहाद्विषीदति।
पाण्डुरकपोलपरिचुम्बिनश्चिकुरभरान्
पृष्ठे विनिधाय मन्त्रपृष्ठे गता सीदति
ध्यानमग्नचित्तमवधानरहितेयं हन्त
मृगमुपधानतले विवशं निषीदति ॥ १३ ॥

पञ्जरस्थितैः पक्षिभिः प्रमोदं न प्राप्नुवन्ती, ततः पराङ्मुखीभूता, वीणाद्वारा मनाक् (किञ्चित्) विरहे विनोदं कर्तुं मा प्रसीदति। सखीजनार्पितया वीणाद्वारा विरहं विस्मर्तुं सान्त्वयमाना भवतीत्याशयः। तत्रापि विनोदमलभमाना तां निक्षिप्य कामं यथेच्छं दयितं चिन्तयन्ती सा हन्त विरहात् इन्व

विषादं प्राप्नोति। चिकुरभरान् केशनिचयान्। अनेन घनानामपि तेषां भाराधिततैवेति सूच्यते। 'भरम्' इत्यनुक्त्वा 'भरान्' इति बहुत्वेन, अप्रसाधन वशात्केशानां वेणयो जातास्ताश्च बहुशो विकीर्णा इति समूहस्यापि बहुत्वेन विरहातिशयो ध्वन्यते। तल्पोपरिस्थिता सीदति (क्लिश्यति)। ध्याननम्र चित्तं यस्मिन्कर्मणि यथा भवति तथा, मूढम् अवधानरहिता, मीलितनयन तथा वैचित्र्यमवाप्ता इव चित्रगता वियोगिनी हन्त निवसम्, उपधानोपरि निषीदति–सर्वंभर तल्लिखत स्थापयतीत्याशयः ॥ १३ ॥

कुशकरकञ्जशायिकोमलकपोलतला
मुहुरमनञ्जनदृङ् मन्थरमवेक्षते
सदयसखीभिरुपनीतं वेषभूषादिक-
मुष्णमुच्छ्वसन्ती विपरीतं पर्यवेक्षते ।
मञ्जुनाथ काञ्चनपिशङ्गतनुदेहलता
मनुजगतागतेषु तमिन प्रतीक्षते
निविडनिबद्धामेकवेणीमियमन्यमना
वारं वारमेणीचलनयना निरीक्षते ॥ १४ ॥

कृशे करकमले शेते तच्छीलं कोमलं कपोलतलं यस्याः सा, कृशोदरी करे स्थापितमुखाम्बुजा इत्यर्थः। 'शायि'पदेन मुखकमलस्य निश्चेष्टता ध्वन्यते। अनादृतशृङ्गारत्वाद् अनञ्जने दृशौ (नेत्रे) यस्याः, अथवा सखी नामाग्रहात् प्रपीडनान्तरं दत्तकज्जलापि रोदनादनञ्जनदृक्। सखीनामाग्रहात् इन्तःशरीरावलोकनार्थमानीतं दर्पणं मन्दं यथा स्यात्तथा अवेक्षते। चिर रसाहतया नेत्रस्य स्याचगमेन विरहातिशयो ध्वन्यते। कदाचित्प्रसाधनादिषु व्यासज्यमानमनसा क्षणं विनोदः स्यादिति सदयाभिः सखीभिरानीतं वेषभूषादिकं पूर्णतकोष्णोच्छ्वासा विपरीतं (अमण्डनकरम्) पर्यवेक्षते जानाति। अथवा, सदयसखीभिर्वेषभूषादिकं सम्मुखे आनीतम्, इयं तु उष्णं निःश्वसन्ती

घृणापत्रात् विपरीतं ( ततो विरुद्धं पृष्ठभागे ) अवेक्षते । काञ्चनवत् पिशङ्गा ( पीता ) तनुः देहलता यस्याः सा । अनेन स्वाभाविकशोभाशालिता ध्वनिता । गृहवर्तिनां लोकानां गमनाऽऽगमनेषु तं प्रतीक्षत इव । एवमासक्तमनाः प्रियतमः कथमवधिकालं लङ्घयेदिति असमयेऽपि तं प्रतीक्षत इति प्रेमातिशयो व्यज्यते । गाढं परिजटिलाम् एकां वेणीम् ( सर्वेषां केशानामेकं पलीकरम् ) अन्यत्र सन्धार्यीक्षणापि, वेणीनिरीक्षणे गृहीतव्यग्रनयना सती मुहुर्मुहुर्निरीक्षते । वेणीं पश्यन्ती पुनः प्रियतमसमागमसुखं स्मरन्तीव्यग्रमनाः । प्रिय एव गमनसमयप्रतिज्ञानुसारं वेणीमवमोचयिष्यति, अथवा दैववशात् क्वेयं वेणी सुन्दरघनविलुम्परूपे परिणमते इति मुहुर्वेणीवीक्षणव्यापारः ॥ १४ ॥

---

### —॥ दैवघनाक्षरीच्छन्दः ॥—

विश्रम्भं प्रयातवति परिजनवर्गे भूरि-
संरम्भं दधाति परिचरणं चरति चरति
विरहकृतयातनानितान्तमेव यान्ति गता
शान्ति नोपयाति हृदि पङ्कजं हरति हरति ।
मञ्जुनाथ मन्युममारोहं वर्णयामि किमु
संमोहं गमेति जने सविधे सरति सरति
विषममधैर्यमहो वर्द्धते वयस्यागमे
धैर्यमथ तस्या मनोधरणी धरति धरति ॥ १५ ॥

विश्रम्भं विश्रामं गतवति, अतिविश्वस्ते इत्यर्थः । अनेन परिजनस्य हृदयाभिज्ञता व्यज्यते । तथा परिचर्यां कुर्वन्ति कुर्वन्ति, परिजनवर्गे भूरिसंरम्भं दधाति । ( अतिकोलाहलं करोति, 'हंगामा करती है' भाषा ) । कुर्वन्ति कुर्वन्तीति द्विरुक्त्या परिचर्यायाः पुनःपुनःकरणमेव सम्पूर्णतामवलम्बत इव परिचर्या-

विषये क्रोधं गच्छतीति व्यज्यते। ["परिचर्या करते करतेभी झुंझलाती है" एष भावः।] एवं सर्वत्र द्विरुक्तौ बोध्यम्। परिजनवर्गे शीतलत्वानिमित्तं हृदये कमलं स्थापयति स्थापयत्येव। तनोति खेदम्। मन्युसमारोहं शोकोपचयम्। किं वर्णयामि, आश्वासननिमित्तं लोके समीपमागच्छत्येव संमोहं समेति, मूर्च्छां गच्छति। तस्या (विरहिण्या) मनोधरणौ हृदयस्थले धैर्यं (आश्वासनम्) धरति धरत्येव सखीगणे, विषममवर्णनीयमधैर्यम् (खेदकृता अधीरता) अहो वर्द्धते। असंगतिः। अत एव, एवमस्या सा नः सखी त्वरितमाश्वासनीयेति दयितदेशगामिनं पान्थं प्रति सख्याः सन्देशः॥ १५॥

क०—विरहविनोदनाय सेयमुपवीणयन्ती
वल्लभं विचिन्तयन्ती मोहमुपवहते
कृशकरकञ्जपरिकीलितकपोलतला
विलुलितकुन्तला विलोकमपहरते।
मञ्जुनाथ रशनाकलापेनोपभान्ती भृशं
शिथिलदुकूलं भुजमूलं मञ्जु वहते
वीणामियमङ्के विनिधाय हन्त पर्यङ्केऽपि
मीलन्नेत्रपङ्केरुहा प्रीतिं नोपलभते॥ १६॥

उपवीणयन्ती वीणया उपगायन्ती सेयं (नायिका), दयितं स्मरन्ती, मोहं गच्छति। विलुलिता इतस्ततो विकीर्णाः केशा यस्याः सा, विलोकमपहरते अवलोकनं संहरते, नेत्रे निमीलयतीत्यर्थः। 'परिकीलित' पदेन पक्षे सत्यपि भुजस्य कपोलादनपसरणेन मनोमालिन्यातिशयो व्यज्यते। मनोहरेण (रत्नालंकृतेन) काञ्चीकलापेन भृशं शोभमाना, शिथिलशाटिकाञ्चलं सुन्दरं भुजमूलं (कुचतटम्) वहते, संभ्रमवशाद् दुकूलाञ्चलं वक्षःस्थलाद् गलति, अत एव कुचतटमालोक्यत इत्याशयः। अतएव शयनपर्यङ्केऽपि, मुद्र्यमाणनेत्रकमला प्रीतिं नोपलभते। वीणावादनादयः सर्वेऽपि विनोदाः प्रियस्मरणका-

ऽङ्कविपादस्याग्रे पराजिता भवन्तीति परमवैभवशालिन्याः पदेपदे सखीभी राज्ञोचितैरुपकरणैः सेव्यमानाया विरहिण्याः क्लेशावस्था सूच्यते। विरहिण्याः शृङ्गारमालोक्य न समालोचकैर्वैमनायितव्यम्, अपि तु बलात्सखीभिर्विनोदाय भूष्यमाणापि न मनागपि मनःसन्तोषं प्रयाति, प्रत्युत मनोवेगो वर्द्धत एवेत्यान्तरिकी अवस्था सूक्ष्ममालोचनीयेत्यलम् ॥ १६ ॥

---

## —॥ प्रवसत्पतिका ॥—

दयितेऽतिदूरदेशयात्राकथामातन्वति
ग्लानिमुपयाति बत बद्धबाष्पमोचना
उषसि विदेशनेयवस्तु चिनयन्ती भृशं
ताम्यति वहन्ती मोहमस्ताऽभूत्प्ररोचना ।
मञ्जुनाथ मन्दिरसमीपादुपयान्तमिमं
पश्यन्ती प्रकामं हन्त बाष्पभृतलोचना
वातायनदेहलीविलम्बिदूनदेहलता
जाता प्रतिमेव वरवारिजविलोचना ॥ १७ ॥

दयिते ( प्रभु स्वामिनि, अभिमतयो चोलने ) करिष्यमाणाया अतिदूरदेशयात्रायाः कथां कुर्वति सति, बद्धं यद् अश्रुविमोचनं यया, ( बद्धबाष्पमोचना ) ( सा इयं नायिका ) ग्लानिमुपयाति। प्रयाणकथाश्रवणमात्रेण, यावती प्रसन्नता पूर्वं मुखे आसीत्सा लुप्यत इति भावः। पुनः प्रातः, विदेशे नेयं स्वामिनो वस्तु चिन्वन्ती संगृह्णती, अतएव विषादवशात् भृशं मोहं ( मूर्च्छां ) वहन्ती, ताम्यति खिद्यति। प्ररोचना ( प्रोत्साहनादिकम् ) अस्ताऽभूदिव। 'त्वं तु विवेकिनी, न मम गमने मनःखेदं धारयिष्यसी'-त्यादि स्वामिप्रोत्साहनादिकं तस्मिन् क्षणे सर्वमप्यगलदिति भावः। अथ

निजगृहसकाशाद् गच्छन्तमिमं ( दयितम् ) पश्यन्ती, भृशं अश्रुप्लुतलोचनाऽभूत्। किं च तस्मिन् क्षणे प्रवसतो वल्लभस्य विलोकनाय, अट्टालिकाया वातायनस्थ ('खिडकी') देहल्यां विलम्बिनी ( दूरंगतस्यापि प्रियस्य भूय: मानस्य विलोकनात् ) दूना म्लाना देहलता यस्याः सा। लतापदेन गच्छतो दयितस्य दर्शनात्तात्कालिकोऽवसादः सूच्यते। अथवा लता, यथा वृक्षाद्याधारेणैव तिष्ठति, तथाऽयं देहोऽपि ( विरहे ) किमाश्रयो भवेदिति भावो ध्वन्यते। कमलनयना ( नायिका ) प्रतिमा इव, मूर्तिरिव जाता। वारिजपदेन तात्कालं निर्गलदश्रुजलवारि स्मर्यते। चतुर्थ–याता जाता भासो वन्धानुगुणः ॥ १७ ॥

---

## —प्रवत्स्यत्पतिका—

दयिते विदेशगमनानुमतिमाकाङ्क्षति
गलितदुकूलमसौ सीदति ससंभ्रमम्
नेत्राभ्यां समीपजलयन्त्रमनुकुर्वतीव
कान्तहृदयेऽपि सृजतीह मौनविभ्रमम्।
मज्जनाथ वपुषि निषक्तबाहुवल्लीभरा
मारुतमथितमञ्जुमल्लीवेति चित्रम्
कीलितकुचाग्रमवमीलितनयनमियं
शीलितविनयमवरुन्धे गमनोद्यमम् ॥ १८ ॥

आकाङ्क्षति याचति सति, विषादकृतेन वैचित्र्येन गलितं दुकूलं यस्मिन्कर्मणि तथा, ससंभ्रमं सीदति अवसन्ना भवति। समीपस्थं जलयन्त्रम् (फुंहारा) अनुकुर्वतीव, नेत्राभ्यां बहुलमश्रु विसृजन्तीत्यर्थः। दयितहृदयेऽपि मौनभावमुत्पादयन्ति, नायिकाया इमामवस्थामवलोक्य दयितोऽपि न किंचिद्वक्तुं सामर्थ्यदिति भावः। कान्तस्य वपुषि व्यापितभुजलताभारा। मारुतोन्मु-

छिन्नमल्लिकालतेव (कान्तवपुषि) विभ्रमम् एति, कान्तशरीरमवलम्बते इति भावः। अत एव, कीलितं कुचाग्रं यथा स्यात्तथा (अनेन कुचयोः कठोरता, वक्षः कान्तवपुषि विसृज्य निबद्धाऽभवदित्यपि च व्यज्यते।) निमीलितनयनम्, लीलितविनयं (स्वीकृतनम्रतावचनं) च यथा स्यात्तथा दयितस्य समनोरथं धारयति। सैषा राजकुलवधूनायिका ॥ १८ ॥

---

## —※ विश्रब्धमुरता मध्या ※—

नानाविधव्याजैः केलिभवनविनीताप्यसौ
  भूरिभयभीता द्वार एव स्थितिमातनोति
मातृगृहवार्ताभिर्निकाममवरुद्धाप्यहो
  संनिधौ समेतुं हन्त भूयः करं संधुनोति।
एवमतिमुग्धमतिमञ्जुलमतीवा वयो
  नैपुणेन नीताऽनङ्गगोचरं मनो धिनोति
या पुरे स्पर्श एव चटुचीत्कृतानि चक्रे चिरं
  सैव सीत्कृतानि सुरसदने समातनोति ॥ १९ ॥

केलिभवनं विनीता प्रापितापि। केलिभवनस्य द्वारे एव तिष्ठति। यदा च भवनद्वारादपि गन्तुं प्रयतते, तदा मातृगृहस्य वार्ताभिः अतिप्रयत्नेन अवरुद्धापि, प्रियस्य संनिधौ आगन्तुं तु पुनः करं धुनोति। करं धृत्वापि आगन्तुं निषिध्यमानत्वेन, पितृगृहस्य स्थाने मातृगृहपदेन मातुर्वृत्तान्ताद् मनोविनोदेन निमग्नो मातुः प्रेम तस्याः दृश्यते। एवं शनैः शनैः अति-मुग्धम्, अतिमनोहरं च तद्विषयः अर्पिता, (वाञ्छितवती) प्रियतमेन अतिनैपुण्यपूर्वकं शनैः शनैरनङ्गगोचरं कामचरितं नीता सती, इदानीं स्वये-

एभिः प्रियस्य मनः प्रीणयति । अतएव सर्वसारमाह—पूर्वं या स्पर्शमात्रे कृते एव निजमोचनाय प्रियचाटुपूर्वकाणि चीत्कृतानि चक्रे । अथवा चटुलानि चञ्चलानि चीत्कृतानि चक्रे, सा एव संप्रति सुखसदने सीत्कृतानि करोति । पूर्वं नाममात्रतः केलिभवनमासीदिदानीं तु सत्यं तत्सुखसदनमभूदिति सुख-सदनपदेन ध्वन्यते ॥ १९ ॥

---

## —※ लक्षिता ※—

निभृतमुपागतेन नक्तं दयितेन रतिं
 समधिकलज्जा सा सखीतो यच्चिरोदधौ
तदिदं निबुध्य सखी प्रातः कुसुमोपवने
 व्यङ्ग्यवचनेन तामजस्रं लज्जितां दधौ ।
विदलितकङ्कणं छलेन गोपयन्ती सा तु
 दक्षिणं कराब्जमवकुञ्च्य मौनमायया
लुम्पन्ती कपोलमवमर्शमुद्रयैव सखी-
 संमुखे शशाङ्कमुखी नम्रमुखी संबभौ ॥ २० ॥

नक्तं रात्रौ गुप्तमागतेन दयितेन साकं संजातां रतिम्, अतिलज्जावती सा नायिका सखीसकाशे, यत् (यस्मात् कारणात्) गोपयांचकार । तदिदं गोपितं वृत्तं निबुध्य (ज्ञात्वा), सखी प्रातः कुसुमोपवने तां नायिकां व्यङ्ग्य-वचनैः अतिलज्जितां चकार । रात्रौ रतिसंभ्रमे, विदलितः कङ्कणः (करव-लयः) यस्य ईदृशं दक्षिणं करकमलं निवेश, अवकुञ्च्य पृष्ठदेशे संहृत्य गोप-यन्ती सा (नायिका) मौनमायया, तूष्णीमभवत् । तथा—अवमर्शमुद्रयैव विचारमुद्रयैव शिरःन्यस्ता (निपतनाद्धितं) कपोलं गोपयन्ती शशाङ्क-

मुखी, सख्याः संमुखे नम्रमुखी सती शुशुभे । नायिकया एवं मुखमुद्रा कृता यया किञ्चिदिदं विचारयति, तदा च तादृशे व्यापारे मुखमवनमयन्ती, सा मुग्धा मुखाञ्चलेन कपोलमाच्छाद्य नम्रमुखी सती तस्थावित्याशयः २०

---

## —स्वयंदूतिका (वचनविदग्धा)—

याता निजजनकनिकेतमुपयाता पति-
रपसि विदेशान्प्रति याता दयितोऽधुना
श्वश्रूरियमन्धा, निशि शय्यायां निमग्ना भवे-
द्देवरोऽपि कार्यप्रतिबन्धाद्भीतोऽधुना ।
मञ्जुनाथ मेघमण्डलेन मेचकाभं नभो
भवनेऽहमेका न भोः सुप्ता भयतोऽधुना
क्षम्यतां दिनान्तसमयागत चतुरपान्थ !
विवशा निवासमिह माधवासे यतोऽधुना ॥ २१ ॥

कारितमिति यावत् । मञ्जुनेत्यनेन मम मनो न हस्तगतमत एवास्तिग्रन्थकारितदिगन्ते समयेऽवश्यं स्थातव्यमिति गुप्तं सूच्यते । भोः (पान्थ) भवने अहम् एका, अत एव भयात् अधुना सुस्था सुचित्ता नास्मि । भयाद् अधुना सुस्था नेत्यनेन, एवं दशायां त्वां विना मम सुस्थितिर्न भवेदिति सूच्यते । 'अधुना' पदेनात्र 'इदानीमसुस्थापि त्वत्समागमे' सुखिनी भवेयमिति पान्थानुकूल्यं द्योत्यते । त्वं दिनान्ते सायमागत इति एकाकिनी स्त्री अहं त्वां कथं आवासयामीति वाच्योऽर्थः । वास्तवे तु सायंकाले आगतः पान्थः क्वान्यत्र भ्रमीष्यतेति तव स्थितिरत्रैव समुचितेति व्यज्यते । 'चतुर' पदेन त्वं चतुर इति मद्विवक्षां ज्ञात्वा क्षमापूर्वकमन्यत्र गमिष्यसीति वाच्योऽर्थः । वास्तवे तु एवं व्यङ्ग्यार्थबोधविदग्धाय किं तेऽधिकं वदामीति स्वाभिप्रायो द्योत्यते । अधुना आवासे (निवासं कारयितुम्) विवदास्मीति 'अधुना' पदेन यदि आवयोः संवादं शृण्वतां लोकानां भयेन, इदानीमिति गच्छसि, तदा किञ्चिद्विलम्ब्य पुनरागन्तव्यमिति मार्गो दर्श्यते ॥ २१ ॥

---

→※ विप्रलब्धा ※←

कश्चिन्मिषमाप्य मञ्जु विरचितवेषा पूर्व-
संकेतितमेषा केलिवनमपि संययौ।
तत्र चिरचिन्तितमनागतं दयितमेत्य
दूनहृदयाऽसौ दीर्घनिःश्वासान्मुहुर्जहौ ।
भ्राम्यन्नेत्रकञ्जमतिताम्यत्तुङ्गवक्षोरुहं
भ्राम्यद्भुजलतिकं विमोहमियमाययौ
तामेतामवस्थामवलोक्य सखी स्तम्भितेव,
मोहमागतेव, चित्रलिखितेव, निर्ममौ ॥ २२ ॥

'मानिनी"



" मन्दीभूतमानापि च किं दीनं न मोदयसे
कालिन्दीपुलिनगतमिन्दीवरनयने ! "

Lakshmi Art Bombay, 8

मधु मनोहरं यथा स्यात्तथा विरचितवेषा कृतशृङ्गारा एषा ( नायिका ) पूर्वतः संकेतितं केलिवनं कंचिद् मिषम् आ-आप्य ययौ । तत्र केलिवने चिरकालात् हृदये चिन्तितं दयितम् अनागतम्, आ-ईक्ष्य ( दृष्ट्वा ) । तदथ प्रियमार्गविलोकनेन भ्राम्यन्ती लिखमाने नेत्रकमले यस्मिन्कर्मणि तथा, निःश्वाससमधार्सैर्गताश्रितकञ्चुकयो अनिलाम्यन्तौ ( क्षिपन्तौ ) कुचौ पयोधरौ यस्मिन् कर्मणि तथा, भ्राम्यन्त्यौ भुजलते यस्मिन् कर्मणि तथा, इयम् नायिका विमोहम् आपपौ, मुमोह । निकटे स्थिता सखी, तामेतां मोहपरवशां विलोक्य, मोहम् आगतेव वैचित्र्यं प्राप्तेव, स्तम्भं गतेव चित्रार्पि-तेव, नितरां क्षमां चुक्षुभे ॥ २२ ॥

---

—※ मानिनी ※—

निपुणपुलिन्दीगणसेवितसमीपभुवि
सरसि न सङ्गताऽसि तं दीनं सुवदने !
पाठं दीर्घदाही काममन्दीकृतेयं यत
मोहमदसन्दी ते विलासो मञ्जुनयने ! ।
मञ्जुनाय सन्दीपितविरहहुताशमिमं
दयितममन्दीभूततापं कञ्जनयने
मन्दीभूतमानापि च किं दीनं न मोदयसे
कालिन्दीपुलिनगतमिन्दीवरनयने ! ॥ २३ ॥

हे सुवदने ! ( इदानीं बोध्यमानमेव मुग्धात् यत्र इति सूच्यते ) निपुणेन रहस्यगोपनचतुरेण पुलिन्दीगणेन सेविता ( रक्षिता ) समीपभूः ( प्रान्त-देशः ) यस्य ईदृशे सरोवरे, तं दीनं नायकं त्वं न संगतासि न अभिसृतासि । नायकेन यस्मिन् सरस्तटे संकेतो दत्तस्तत्र तेन सार्धं न मिलितासि । न

च तत्र रहस्यभेदशङ्का कार्या, यतस्तत्र निपुणो भिल्लीगणः समन्तादक्षणापेक्षणं करोतीत्याशयः। हे मञ्जुनयने! तव वियोगे अतिदीर्घ (अत्यन्तम्) दाहकरः, मोहं मदं च स्यन्दते प्रसूते ईदृशस्तेऽयं विलासस्तं जनं कामस्य वन्दिनं कुरुते। दयितस्ते विलासैरतिवशीभूतस्त्वया च कामवन्दीकृतः सोऽवश्यं रक्षणीय इत्याशयः। सन्दीपितो विरहवह्निर्यस्य तम्, अत एव कमलनिर्मिते शयने शयनीयेऽपि, न मन्दीभूतः (प्रशान्तः) तापो यस्येदानीमिमम्। अत एव दीनं दयायोग्यम्, त्वत्प्रतीक्षायां कालिन्दीपुलिने स्थितमिमं दयितम्, मन्दीभूतमानापि हे इन्दीवरनेत्रे त्वं किमिति न प्रीणयसि। तव मानोऽपि शान्तः, सोऽपि त्वत्प्रतीक्षया अतिश्रान्तो दयायोग्योऽस्तीति साम्प्रतमपि तं किमिति नाभिसरसीति भाविकां प्रति सख्या दूत्या वा उक्तिः। पुलिन्दी तं दीत्यादयः सर्वचरणगताः प्रासाः प्रेक्ष्याः ॥ २३ ॥



## कलहान्तरिता



" एवं प्रागमङ्गीकृतनाथं परितप्यतेऽद्य
संदीपितकामवेगमिग्धापरनेत्रया ॥ "

Lakshmi Art, Bombay, 8




तत्र पूर्वं

## स्वयं सन्देशः

काचित्कुवलयलोचना निजभवनान्तिकमेव ।
दिनावसाने समचरत्सायंसमयरमेव ॥ १ ॥
प्रतिवेशिन्यपि निजभवनमेका समधिरुरोह ।
पथि पथिकः कश्चन तदा पूर्वां वीक्ष्य मुमोह ॥२॥
निशि निवासमयमभिलपन् साकूतं समुवाच ।
संबोध्य प्रतिवेशिनीं सरसं शंसति सा च ॥ ३ ॥

काचित्सुन्दरी दिनस्यावसानकाले सायंकालस्य रमा (लक्ष्मीः शोभा) इव, निजगृहस्य समीपे एव संचरति स्म विहरति स्मेत्यर्थः ॥ १ ॥ तस्मिन् समये तस्याः सुन्दर्याः एका प्रतिवेशिनी अपि ('पड़ोसिन') निजभवनम्, आरुरोह, गृहपृष्ठे आगतवतीत्यर्थः । तदा मार्गे गच्छन् कोऽपि पथिकः पूर्वाम् (पूर्वोक्तां सुन्दरीम्) दृष्ट्वा मोहितोऽभूत् ॥ २ ॥ अत एव, अयं सुन्दर्यां गृहे रात्रौ निवासं याचन् सन् साकूतं (साभिप्रायम्) उवाच । सा (सुन्दरी अपि) प्रतिवेशिनीं संबोध्य मधुरं शंसति प्रत्युत्तरयति । सा साक्षात्पथिकाय उत्तरं न ददाति, किन्तु मध्ये प्रतिवेशिनीं संबोधयति, उत्तरं तु तत् पथिकार्थमवगन्तव्यम् ॥ ३ ॥ (भूमिका ।)

पथिकः—नभसि जृम्भते घनघटा, तमसि लुप्यतेऽध्वापि ।
वदसि वसतिमुपयामि यदि, भवसि पथिकसदयापि ॥४॥

जृम्भते क्रमक्रमेण वर्द्धते मेघघटायाः पर्यन्तो न दृश्यते, अग्रे किं भवेदिति भयेन अत्रैव निवासस्यावश्यकता द्योत्यते । अध्वा मार्गोऽपि अन्धकारे न दृश्यते । अग्रे कथं गम्येत । यदि त्वं वदसि, तर्हि वसतिं (निवासम्) प्राप्नोमि अत्र निवसामीत्यर्थः । 'यदि' काकाक्षिगोलकन्यायेनाग्रेपि संबध्यते । यदि त्वं पथिके (मार्गलङ्घनपरिश्रमाद्दयनीये) सदयापि भवसि, तर्हि अत्र निवासं प्राप्नोमि । अनेन केवलं निवास एव नाभीष्टः किन्तु अहं ते दयामपि वाञ्छामीति निगूढमभिप्रायो ध्वन्यते चतुर्ष्वपि चरणेषु 'नभसि, तमसि' इत्यादयः प्रासाः प्रेक्ष्याः ॥ ४ ॥

सुन्दरी—भवनमपरिजनमिदमियं विजनविनेयनिशास्मि ।
वसतिमभ्युपैतुं पुरः प्रतिवेशिनि ! विवशास्मि ॥ ५ ॥

इदं भवनम् परिजनशून्यमस्ति । इयम् अहम्, विजने विनेया (यापनीया) निशा यस्या ईदृशी, अस्मि । अपरिजनेऽस्मिन्भवने अहमेकाकिनी रात्रिं यापयिष्यामि । अत एव हे पुरः प्रतिवेशिनि ! मम गृहाग्रे निवासिनि ! निवासं स्वीकर्तुं विवशास्मि । त्वं मम सर्वदा गृहे दृष्टिं स्थापयसि, यतस्त्वं मम गृहाग्रभागे वससि अतएवैकाकिनी रात्रौ कथं निवासं स्वीकरोमीति वाच्योऽर्थः । व्यङ्ग्यार्थस्तु—पुरः अग्रे (अस्याः प्रतिवेशिन्याः संमुखे) तव रात्रिनिवासं स्वीकर्तुं कथं शक्नोमि । अतएवाहमुपरिष्टात् प्रतिविष्यामि, अस्यां गतायां तव निवासो ममावश्यकः, यतोऽहं 'विजनविनेयनिशास्मि ।' इति ॥ ५ ॥

पथिकः—न परिजनापेक्षा सुमुखि ! पथिकजनाय निशेति ।
दूरपरिश्रान्तोऽधुना पान्थो वसतिमवैति ॥ ६ ॥

गृहे परिजनो नास्ति, अतएवागन्तुकस्यावश्यककार्यं कः पूरयिष्यतीत्यर्थं ज्ञात्वा, पथिकः प्रत्याह—हे सुमुखि ! (यद्यपि स्वमुखं विलोकितं तव एव

स्वदायत्तोऽस्मीति ध्वन्यते।) निशा रात्रिरस्तीति, पथिकजनाय परिजनस्यापेक्षा नास्ति रात्रौ शयनं विहाय नान्यत्कार्यम्, अतएव परिजनो नापेक्ष्यत इत्यर्थः। अतिपरिश्रान्तः पथिकः साम्प्रतं निवासमेव अवैति जानाति। अहं न कालविलम्बं सहे, अत एव निवासस्वीकार एवावश्यक इति सूच्यते ॥ ६ ॥

सुन्द०—संनिहितो न हि गृहपतिश्चलितोऽथ परिजनोपि।
भयतो भवतु कथं स्थितिर्न पुनरितोऽन्यः कोपि ॥ ७ ॥

गृहस्य पतिः भर्ता अत्र नास्ति। अनेन 'गृहमात्रस्य स स्वामी न मम हृदयस्येति' सूच्यते। परिजनोपि गतः। इतः अस्मिन् स्थाने। 'संनिहितो चलितो' इत्यादयश्चतुर्ष्वपि पादेषु प्रासाः ॥ ७ ॥

पथि०—उपनतघनजाले जलदकाले कोपि न याति।
जनरहिता शालेयमिति बाले! नवमिव भाति ॥ ८ ॥

उपनतं घनजालं यस्मिन् घनघटाऽऽच्छन्ने इत्यर्थः। प्रायः ईदृशे समये यात्रा निषिद्धा, अतएव ईदृशे समये इयं शाला (भवनम्) जनरहितेति मे मनसि नवीनमिव भाति प्रतीयते। बाले! इति संबुद्ध्या बालां मयादृशीं विहाय कोऽस्मिन्समये प्रोषित इति सत्यं स केवलं गृहपतिरेवेति ध्वन्यते। बालामन्त्रणं सरसे विषयप्रवृत्तानां तादृशमारभ्यं पथिकेनेति बोद्धव्यम् ॥ ८ ॥

सुन्द०—चिरतीर्थव्यसनी पतिर्जरती परमबुधेति।
युवती स्वहमेकाकिनी कियतीयं विपदेति ॥ ९ ॥

कथमस्मिन्समये स प्रोषित इति तदुत्तरे सखेदमाह—पतिः चिरात् तीर्थयात्राव्यसनी। पतिरन्देन स केवलं मां रक्षत्येव न पुनर्मोदयतीति खेदो ध्वनितः। जरती वृद्धा श्वश्रूः, परम् अत्यन्तं अबुधा अज्ञा इति। सा वृद्धा सत्यपि नानुभवशालिनी, अतएवास्मिन्समये स्वसुतं प्रवासयति। अनेन, इमां वृद्धां दृष्ट्वा न संकुचितव्यम्—यत इयं महामूढेति स्पष्टमभिव्य-

पम् । जरतीपदेन तस्यानवास्था च ध्वनिता । युवती अहम् एकाकिनी अस्मि इयं विपद् जरती किंकरिमाणा एति आगच्छति । वीर्येयाग्रया प्रौढस्वाप- स्तिर्युवत्या मम मेघकालेऽस्मिन्समुपस्थितेति तमेवानुयाहि । विरती जरती- त्यादयः पदेष्वपि धर्मेषु भासाः ॥ ९ ॥

पथि०—हन्त न किल सन्ततमहं सुदति ! वसतिमिच्छामि ।
निशि निवासमपि नो दिशसि निभृतमुषसि गच्छामि ॥१०॥

पथिकोऽयं गतः, जरती भद्रेति दीर्घां गृहकथां त्वयारब्धेत्याह—अहं संततं सर्वदा निवासं नेच्छामि । अपि तु केवलमेकस्यां रात्रौ नो दिशसि, न ददासि । उषसि प्रातः निभृतं निःशब्दं गच्छामि गमिष्यामि, न पुनरत्र निवासं याचिष्ये इति वाच्योर्थः । व्यङ्ग्यार्थस्तु, रात्रौ मम निवासो न कस्यचिद्विदितो भविष्यतः, अतिप्रातःकाले निःशब्दं यास्यामीति न त्वया भेतव्य- मिति ॥ १० ॥

शुन्द०—जाने पथि सखि ! संकटान् स्थितिदानेऽपि बिभेमि ।
निशि निवासयामे जने प्रतिवेशिनि ! किमुपैमि ॥ ११ ॥

मार्गे वर्षाकालेऽस्मिन् संकटान् क्लेशानहं जानामि, परं सखि ! स्थितेर्नि- वासस्य दानेऽपि बिभेमि । मार्गक्लेशान् बुद्ध्वापि निवासदाने लोकेभ्योऽहं बिभेमीति सूच्यते । निशि रात्रौ निवासाय (हेतोः) यामे ग्रामे लोकेऽहं किमुपैमि, किं करोमि ! यदि रात्रौ वासयामि, तर्हि लोकाः सर्वेऽपि (प्रतिवे- श्यादयः) वक्रा भविष्यन्तीत्याशयः ॥ ११ ॥

पथि०—इममलिन्दमरविन्दमुखि ! यदि सहसेऽधिवसामि ।
वामलोकलोचनविषयमपि वद कथमुपयामि ॥ १२ ॥

दुष्टा लोका यतः भविष्यन्तीत्यस्योत्तरे आह—हे कमलमुखि ! यदि सहसे मर्षयसे, तर्हि इमम् अङ्गुल्या निर्दिश्य अलिन्दम् द्वारसमीपवर्तिकोष्ठम्, ('पौर्टी') अधिवसामि । एवंकृते-वामस्य लोकस्य लोचनविषयं कथं गच्छामि, यदस्मिन् निभृतप्रकोष्ठे वासयामि तर्हि लोकाः कथं पश्ये-

सुरिसात्वयो व्यङ्ग्यः । वाच्यस्तु–अलिन्दे शयानं मां दृष्ट्वा लोकाः कथं यथा भवेयुर्यतो अहं बहिर्द्वारसमीपे स्थास्यामीति ॥ १२ ॥

सुन्द०—अ(ना)स्तरणमलिन्दतलमन्धकारबहुलं तु ।
सखि ! सुरतमन्या वसतयः पथिकसुखाय भवन्तु ॥१३॥

अलिन्दतलम् आस्तरणरहितम्, बहुलान्धकारम् । अस्ति अत एव तव क्लेशो भवेदिति वाच्योऽर्थः । अन्धकारे लोकरहिते निर्भयस्थानमस्मामिः किं करिष्यतीति पूर्वमेव विचारयेति व्यङ्ग्योऽर्थः । अन्या वसतयः अन्यानि निवासस्थानानि, पथिकसुखाय सुखं यथा तथा आयन्ताम् । तव सुखं मेऽभिप्रेतं, यदीदृशे अलिन्दे तव सुखं संभवति तर्हि सम्यगिदम्, अन्यथा त्वह विपरीताशयः ॥ १३ ॥

पथि०—वियति निस्तृताम्बुदघटा, वहति पूर्वपवनोऽपि ।
महति विप्रकर्षे भवेत्सुदति ! सुखदवासोऽपि ॥ १४ ॥

सुखं मे भवेदिति त्वं कथयसि, तर्हि पश्य, वियति आकाशे मेघघटा सर्वतः प्रसृता । सुखदो निवासो महति विप्रकर्षे अतिदूरे भवेत् । यदि मम सुखं पृच्छसि, तर्हि प्रवासाद्विनिवृत्य गृहं गतस्यैव मम प्रियतमासमागमात्सुखदो वासो भवेत् । अत एवातिदूरत्वकालत्वं घनघटाच्छादितायामस्यां रजन्यां, अत्रैव सुखदो वासोऽस्त्विति आशयः । वियति वहतीत्यादयनुप्रासोऽपि पादेषु विषमोऽनुप्रासः ॥ १४ ॥

सुन्द०—त्यज निवासनिर्बन्धमयि भज निपुणं किमु शास्मि ।
अजनि पयोधरसन्नता रजनिरियं विवशास्मि ॥ १५ ॥

एतावदुक्तेऽपि न निवासमाग्रहाद्विरमतीति किंचित्कुप्यन्तीव मनोवेदिनी मनुरक्ता सानुरागविदग्धैवाह—अयि ! निवासस्य इमं निर्बन्धमाग्रहं त्यज । इदानीं भज, गच्छ । निपुणं त्वामहं किं वदामि । अहं दुर्निवारिणी इयं च रात्रिरिति लोकमर्यादामिपुणं त्वां किमहं वदामीति वाच्योऽर्थः । एतावदुक्तेऽपि निपुणं त्वामहं पयोधरं किं वक्ष्यामीति व्यङ्ग्यः । इयं रजनिः

पयोधरैः मेघैः संनता व्याप्ता रजनि जाता । अतएवास्मिन्नन्धकारे तवा-गन्तुकं पुरुषं किमधिकं संस्थामि । अत एव निवासने अहं बिभ्यास्मि । सावसत्तु—पयोधरयोः सन्नता रोमाञ्चकम्पादिवशादसहनता सजनि जाता । सद्+न+ता । अहन्तुरीपितमदनतया पुष्पीकृतस्विन्नपयोधरा जाता । इयं च रजनिः (अर्थात् भनितरां कामं प्रदीपयति ।) अत एवाहं बिभ्यास्मि, माधिकं सोढुं पारयामीत्याशयः । सजनि भजनि मजनि इत्यादयश्चत्वारः मासाः ॥ १५ ॥

* * * *

इति संलपतोरेतयोस्त्वरितो वारिधरोऽपि ।
जवतो वर्षितुमापतत्सरितो धरणिरलोपि ॥ १६ ॥

एवं तयोः (सुन्दरीपथिकयोः) संलापं कुर्वतोरेव त्वरायुक्तो मेघः, वेगात् वर्षितुमापतत्, सहसाभवत् । तथा च मेघो वर्षणमारब्धः यथा वायुमिश्रितजलेन पर्यन्ततः पृथिवी लुप्ता । एव च, न कोपि द्रष्टुं पारये-दिति पथिकनिवासमौकर्यं सुचितम् ॥ १६ ॥

प्रतिवेशनमनुपदमियं प्रतिवेशिन्ययति स ।
युवतिरसावविशद् गृहं पथिकोपि च विशति स ॥१७॥

वृष्टिभयात् इयं प्रतिवेशिनी, प्रतिवेशनं गृहम्, अयति गच्छति स्म । इयं युवतिरपि निजगृहमविशत् । अस्मिन्नवसरे पथिकोपि पूर्वोक्तसुन्दर्याः गृहं विशति स्म ॥ १७ ॥

सो०—युवतिविलासमवेक्ष्य, द्रवति घनोपि मनो विना ।
चलति ललितमनवेक्ष्य, वदतिरसिकपथिकः कथम् ॥१८॥

मनो विना, मनसा शून्यः, अचेतन इति यावत् । मेघोपि युवत्या विलासं दृष्ट्वा द्रवति द्रुतहृदयो भवति अतएव तदैवासन्नत् वाप्ये तु वर्षति । यदाऽचेतनस्यैवेयं दशा, तद् तदा अतिरसिकः पथिकः, ललितं (युवत्या विलासम्) अनवेक्ष्य अननुभूय कथं चलति ? अपि तु न चलति । विलासानुभवार्थमेव । सुन्दरीसदनं प्राविशदित्यर्थः ॥ १८ ॥



परवर' प्रसङ्गादुपनतानि पद्यानि, उपदिश्यन्ते तावत्। भावानुकूलो भाव, उभयार्धयोरन्त्यानुप्रास (तुकान्त), संस्कृतभाषायामेवावच्छन्द, इत्यादि सर्वं सकलजातमवधार्यैव समीक्षणीयं भवेत्सहृदयैरिति स्वनाश्यकमेव निवेदनं निपुणेषु।

## —॰ मङ्गलम् ॰—

भवबाधामपनयतु मे, राधा सा मतिधाम।
श्यामो हरितद्युतिमयति, यत्तनुकान्त्या नाम ॥ १ ॥

१—मतिधाम, बुद्धेर्विश्रामस्थानम् (मतिहठीलम्), अर्थात् भवबाधाहरणे अतिप्रवीणा (नागरी) सा राधा, मे भवबाधां जन्ममरणपीडाम्

भपनयतु नाम (पादपूरणार्थकम्) यस्याः (राधायाः) तनुकान्त्या शरीरस्य द्युत्या। श्यामः श्रीकृष्णः (व्रजभाषोचिता संज्ञा)। हरितद्युतिः प्रसन्नमुखलोभायुक्तो भवति। यस्यां श्रीराधायां समीपमागतायामिव श्रीकृष्णो ग्लानिं विहाय पुनर्नवतां धारयति, सा राधा अस्माकं (भक्तानाम्) सांसारिकदुःखसमवलयं दूरीकरोतु भावः। अथ 'हरित'पदम् भाषाप्रयोगानुसारं ['हरा भरा'] इत्याशयमादाय अतिप्रसन्नतार्थकम्। यथा—"मित्रं दृष्ट्वा तापसंतप्तोऽपि नरो हरितो ('हरा') भवति।"

२—'हरित'पदस्य हरितरङ्गमादाय द्वितीयोऽप्यर्थो भवति। यस्या राधायाश्चम्पकपुष्पपीतवर्णया तनुकान्त्या श्यामः, कृष्णवर्णोऽपि श्रीकृष्णो हरितो हरिद्वाभां द्युतिं धारयति, सा राधा। श्यामपीतयोः संभेदेन हरितो वर्ण उत्पद्यत इति सुप्रसिद्धम्। एवं च—पीतश्यामयोः संयोगेन यथा अपूर्वो हरितो वर्ण उत्पद्यते, एवम् सात्विकप्रेमगोत्पयोरनयोः परस्परसहभावसमन्वयात् उपासनया चित्तमलं शोधयतां साधकानामपि अपूर्वा काचिच्छान्तिरुत्पद्यत इति व्यज्यते।

३—यस्यास्तनुकान्त्या शरीरच्छायेन कान्तिरिच्छा (अतएव ध्यानम्), अर्थात् यस्या राधायाः स्वहृदयमन्दिरे ध्यानोपासनया श्यामवर्णः कल्मषपातकादिरूपश्यामपदार्थः (पातकस्य वर्णः श्यामः), भाषाशास्त्रानुसारं 'हरितद्युति' हतद्युति (निष्प्रभम्) भवति, सा राधेत्यप्यर्थः केश्चिट्टीकाकृद्भिः कृतः, परं सोऽयं केवलं विहारिणि भतिभक्तिसूचकमात्रं हठादाकर्षणं निदर्शयति।

अपि च हिन्दीपद्ये 'झाँई' 'हरित' शब्दावनेकार्थकौ। 'झाँई' पदस्यार्थाः (१) झाँई इति छलक। (२) ध्यानपदस्यापभ्रंशेन 'झाँसा' स्वरूपमापाद्य क्रमकमेण 'झाँई' इति निष्पन्नस्य 'ध्यानम्' इति तृतीयोऽर्थः कष्टकल्पनया कल्प्यते।

मम अनुवादपद्ये तु 'यत्तनुकान्त्या' अत्र कान्तिपदस्य 'कान्तिः' दीप्तिः प्रकाशः, 'कान्तिः' शोभा, 'कान्तिः' इच्छा, इत्यर्थत्रयं सर्वत्र सुप्रसिद्धमनायासेन संगच्छते। तथा च—यस्या राधायास्तनुकान्त्या शरीरशोभया कृष्णो हृष्टः प्रसन्नो भवति। (१)

ष्ट्याऽतिशयेन साध्यते। पर "है यही राधा नागरी" इति प्रयोगस्तु नाद्यावधि श्रुत । अस्तु रत्नाकरोऽपि क्षारतां कुत्रचित्प्रकटयत्येव।

आतपमात्रप्रकाशकेऽस्मिन्व्याख्यानेऽलङ्कारादिविचारस्तु न प्रस्तूयतेति सहृदयसर्वमन्यतोऽवसेयम्।

→ श्रीकृष्णशोभावर्णनम् ←

शिरसि मुकुटमधिकटि ललितपटो, वेणुरधिपाणि ।
मालोरसि, तावकमिदं रूप हृदि करवाणि ॥ २ ॥

हे हरे! शिरसि मुकुटम्, अधिकटि कटिदेशे ललित पट, गैरिकवर्णीय वस्त्रमित्यर्थ । अधिपाणि पाणौ वेणु (वंशी), उरसि माला (वैजयन्ती)। सर्वत्र 'अस्ती'त्यध्याहार्यम्। इद पूर्वपरिवर्णित तावक रूप हृदये धारयाणि। एतादृश रूप सदा मम हृदये वसेदिति आशासे। आशिषि लोट् ॥२॥

राजति गुञ्जामालिका वक्षसि मुरमथनस्य ।
लसति निःसरन्ती बहिःशिखेव दवदहनस्य ॥ ३ ॥

मुरघातिनो वक्षःस्थलमध्ये पीतस्य दावानलस्य बहिर्निःसरन्ती शिखा इव ज्वाला इव लसति। गुञ्जामाला यथा श्यामलोहिता भवति। एवम्, अन्तःस्थितज्वाला रक्ता, धूमसम्बन्धेन कृष्णा च भवतीति द्वयो साम्यम् ॥ ३ ॥

श्याममधुरमूर्तिर्हरिः पीतपटेन विभाति ।
उषसि नीलमणिशैल इव बालातपेऽभियाति ॥ ४ ॥

---

'सीस मुकुट कटि काछनी, कर मुरली, उर माल ।
ये बानिक मो मन बसौ सदा बिहारी लाल ॥ २ ॥'
'सखि! सोहत गोपाल के उर गुंजन की माल ।
बाहिर लसत मनो पिये दावानल की ज्वाल ॥ ३ ॥'
'सोहत ओढ़े पीत पट स्याम सलोने गात ।
मनौ नीलमनि सैल पर आतप पर्यो प्रभात ॥ ४ ॥'

उषसि बालातपे, उद्यतः सूर्यस्य अरुणे प्रकाशे अभियाति आगच्छति (प्राप्नुवति सति) नीलमणिशैल इव श्यामो हरिः पीताम्बरेण विभाति । 'आतपपन्थो प्रभात' इत्यस्य 'उष्णकरकोमलकरनिचयेन' इति परमानन्दानुवादे तु उषसि सूर्ये उष्णकरता, आतपस्य करनिचय इति कदर्थनमुभयमपि स्थूलम् । पीतातपे न यथा पीताम्बरसाम्यम्, तथा स्तूपमितैः किरणैर्न परितः परिहितस्य पीतपटस्य साम्यम् ॥ ४ ॥

श्रवसि हरेः कुण्डलमिदं दीव्यति मकराकारि ।
हृदयसदनमविशत्स्मरो लसति केतनं द्वारि ॥ ५ ॥

हरेः श्रवसि कर्णे, मकरवत् आकारो यस्य तादृशमिदं कुण्डलं शोभते । अत्र गम्योत्प्रेक्षा पुनरुक्ति—स्मरः कामः कृष्णस्य हृदयरूपं सदनं प्राविशत् प्रवेशान्ते द्वारे च स्मरस्य चिह्नभूतं केतनं (ध्वजः) लसति । कामस्य मकर एव ध्वजः । श्रीकृष्णस्य शोभां वर्णयित्वा दूती कृष्णेन सह कांचन नायिकां संगमयितुमिच्छति । तया च कर्णद्वारा तस्य रूपगुणादिशोभामाकर्ण्य सोयं हृदये कामाय स्थानं दत्तवानत एव एतादृशेऽनुकूले नायके तव एवा रुचिरेवेति व्यङ्ग्यम् । अत्र 'गुणनिमित्तम्' अनुमानमलंकारः—मनोगृहस्याधिकारी राजा स्मरः सांप्रतं स्वदुर्गेऽस्तीति सूचकं चिह्नभूतं केतनं द्वारि लसति । (जब राजा किलेके अन्दर होता है तो इस बातकी सूचनाके लिये, बाहर झंडा फहराता रहता है) इत्यादि अर्थं भाषान्तरेण—आह । एवं नेदं विहारिणोऽर्थानुगुणम् । 'धस्यो' इति पदेन हृदये कामस्य प्रवेशो निधेयत्वेन वर्ण्यते, नायिकार्थं स तत्र गत एव इत्था सखी प्राह—त्वद्गुणश्रवणेन सांप्रतमयं त्वदनुरागी जातः, कामकल्लोलित इति व्यज्यते । पूर्वमेव कामस्याधिकारे तु किं व्यारम्भम्! तथापि पूर्वानुरागे—"श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः" इत्यादि । नायिकां प्रायुक्तिवत्वेन नायिकाया एव हृदयेऽधिकारो वर्णयितुमुचितोऽपि कामस्तु तत्र सहायक एव । हृदयाधिकारिणी तु नायिकैव स्यादिति स्याते कविना कविशिक्षितम् ॥ ५ ॥

---

'मकराकृति गोपालके कुंडल सोहत कान ।
धस्यो मनो हियधर समर ड्योढ़ी लसत निशान ॥ ५ ॥'

बर्हिमुकुटचन्द्रकचयैर्मधुरिपुरिति परिभाति ।
शशिशेखरविजिगीषया शशिशतमिव निदधाति ॥ ६ ॥

बर्ह(मयूरपिच्छ)मुकुटस्य चन्द्रकचयैः (चन्द्राकारैः पिच्छशिरोदेशैः) मधुरिपुः कृष्णः, इति इव शोभते । शशिशेखरस्य (शिवस्य) विजयेच्छया शेखरे चन्द्रशतं निदधाति इव । शिवेन केवलमेकश्चन्द्रः (सोऽपि खण्डितः) शिरसि धारितः, कृष्णस्तु चन्द्रशतमिव धारयतीति भावः ॥ ६ ॥

पीतपटाधरदृक्छटाविच्छुरिता हरिताऽपि ।
अधरधृता हरिमुरलिका सुरपतिधनुरिव भाति ॥ ७ ॥

पीताम्बरस्य, अधरस्य, दृशोः (नेत्रयोः)च, छटया कान्त्या विच्छुरिता मिलिता, स्वयं च पूर्वत एव हरितवंशनिर्मितत्वात् हरितवर्णा हरेः अधरधृता, हरेर्मुरलिका । पूर्वोक्तैर्वर्णैः, इन्द्रस्य धनुरिव भाति । श्रीकृष्णे मुरलिकामधरे धारयति सति, कृष्णधारितस्य पीताम्बरस्य पीता, अधरस्य शोणा, दृशोश्च पाटला श्यामा वा, कान्तिस्तत्र परिपतति । स्वयं हरितवर्णेस्तु मुरलिकायामस्त्येवेति नानावर्णैः सा इन्द्रधनुरिव शोभते । शब्दालङ्कारो भाषायामत्र च, यश्च विशेषतो बन्धुरयति ॥ ७ ॥

→ मुग्धाया वयःसन्धिः ←

गता न शिशुताद्युतिरितो यौवनमङ्गमुपैति ।
द्विविधरङ्गकौशेयमिव तनुराभ्यां रुचिमेति ॥ ८ ॥

---

'मोर मुकुटकी चन्द्रिकनि यौं राजत नँदनन्द ।
मनु ससिसेखरकी अकस किय सेखर सतचन्द ॥ ६ ॥'
'अधर धरत हरिके परत ओठ-डीठि-पट-जोति ।
हरित बाँसकी बाँसुरी इन्द्रधनुषसी होति ॥ ७ ॥'
'छुटी न सिसुताकी झलक झलक्यो जोबन अङ्ग ।
दीपति देह दुहूनि मिलि दिपति ताफता रङ्ग ॥ ८ ॥'

शैशवस्य द्युतिः न गता। शैशवं तु समाप्तम्, परं तस्यानिर्वचनीया काचिद् द्युतिरवशिष्यत एव, पूर्णतया न गतमित्यर्थः। इतः (पक्षान्तरे), यौवनम्, अङ्गम् (कर्मकारकम्) उप एति। समीपे आगच्छति स्पृशतीत्यर्थः। पूर्णतया यौवनस्यागमनं न किन्तु तस्य स्पर्श एव जातः। पूर्णतया बाल्यमपि न गतम्, यौवनमपि स्पष्टतया अङ्गेषु नोद्भूतमिति सोऽयं वयसोः सन्धिः। अतएव—द्विविधरङ्गयुक्तं कौशेयमिव धूपछांहरङ्गयुक्तं 'रेशमीवस्त्रम्' (१५) आभ्यां शैशवयौवनरङ्गाभ्यां तनुः मुग्धायाः शरीरं रुचिम्, अनिर्वचनीयां शोभामेति। 'धूपछायां' नाम्ना प्रसिद्धे कौशेयवस्त्रे द्वाभ्यां रङ्गाभ्यां यथा शोभा, तथा मुग्धाया अङ्गे शैशवयौवनाभ्यां शोभा भवतीत्याशयः। 'द्विविधरागमम्बरमिव द्वैरूप्यं च दधाति।' इति परमानन्दस्तु वैरूप्यमेव प्रकाशितवान्। 'दुहून मिलि, ताफतारङ्ग दिपति' इति विहारिणोऽक्षरैः द्वावपि रङ्गौ एकत्र मिलिताविति भावः। न तु तत्र द्विरूपता। यथा 'धूपछांह' वस्त्रे द्वयोर्वर्णयोरेकीभावः ॥ ८ ॥

सुतनुतिथौ किशोररविरुद्यति शुभपर्वेति।
वयःसन्धिसंक्रान्तिरतिपुण्यैः कस्यचिदेति ॥ ९ ॥

सुन्दरतनुयुक्ता मुग्धा नायिका एव तिथिस्तस्याम्। कैशोरं किशोरावस्थारूपो रविरुदेति, आगच्छति। शैशवावधिं गच्छति। इति, अस्मादेव हेतोरिदं शुभपर्व। द्वादशसु मासेषु, द्वादशनामभेदा द्वादश रवयस्सन्ति। एकस्य मासस्य समाप्तौ, एको रविर्गच्छति द्वितीयश्चोदेति। एवं सुतनु(स्त्री)रूपायां तिथौ शैशवनामको रविर्गच्छति कैशोरनामकश्च रविरुदेति, अयं द्वयोर्गमनागमनकालः अतिपुण्यः, अत एवेदं शुभपर्व। सोऽयं द्वयोर्वयसोः सन्धिः कस्यचिद्भाग्यवतः अतिपुण्यैरेव प्राप्यते। 'वयःसन्धि' पदानुरोधादेवंप्रकारेण वयोद्वयस्य समागम आवश्यकः। अतएवायमर्थ इति 'हरिप्रकाशः'। 'विहारिरत्नाकर'स्तु 'तियतिथि तरुन-किशोर-वय' इति

'तिय तिथि तरनि-किसोरवय पुन्यकाल सम दौन।
काहू पुन्यन पाइयतु बैस संधि संक्रौन ॥ ५ ॥'

पाठमाह । परं यदा 'तिय–तिथि' इति स्त्रियां तिथित्वमारोपितम्, एवं वयसि सूर्यत्वारोपं विना संक्रान्तिः न घटत इति टेढ एव ।

—अङ्कुरितयौवना मुग्धा—

बालाऽलौकिकशैशवं वीक्ष्य सखी सुखमेति ।
एषु दिनेषु निरीक्ष्यतेऽङ्कुरितमुरसि समुदेति ॥ १० ॥

बालायाः अलौकिकम् अपूर्वम् (कैशोरस्य+संभेदेनानुपमम्) शैशवं वीक्ष्य सखी प्रसन्ना भवति । जात्यैकवचनमिदं, उपलक्षणे एकत्वम् । सर्वा एव सख्यः सुखं प्राप्नुवन्ति । एषु दिनेषु तस्या उरसि, अङ्कुरितं वक्षोजयोरङ्कुरणम्, उदेति उत्पन्नमिति दृश्यते ॥ १० ॥

—नवागतयौवना मुग्धा—

निजाङ्गानि मत्वाभिनवयौवननृपतिवरेण ।
स्तन-नितम्बदृग्चेतसां रचितोन्नतिरचिरेण ॥ ११ ॥

अभिनवागतेन यौवनाभिधेन नृपतिवरेण, स्तननितम्बादीनि निजस्य अङ्गानि मत्वा, स्तनयोः नितम्बस्य दृशोः, चेतसश्च, अचिरेण उन्नतिः रचिता कृता । यौवनस्याविर्भावः स्तनादिष्वेव भवतीति एतानि स्वकीयानि मत्वा, यौवनभरेण स्तनयोस्तुङ्गतारूपा, नितम्बस्य घनविशालतारूपा, नयनयोश्चाञ्चल्यकटाक्षरूपा, मनसः शृङ्गारकामनासु प्रवणतारूपा उन्नतिः कृता इति भावः । नवीनमधिकारं प्राप्य यथा कश्चिद्राजा स्वसहायकानां पदवृद्धिं करोत्येवं यौवननृपेण स्वीयाङ्गानामुन्नतिः कृतेत्याशयः । अत्र 'नयन-नितम्ब-स्तन–दृगाधिपत्यं स हिदेन' इति परमानन्दानुवादे नयने अधिके जाते,

---

'लाल ! अलौकिक लरकई लखि लखि सखी सिहाँति ।
आज कालिह में देखियत उर उकसौंही भाँति ॥ १० ॥'
'अपने अंगके जानिकै जोबन–नृपति प्रबीन ।
स्तनमननैननितम्बको बड़ो इजाफा कीन ॥ ११ ॥'

त्रीणि नयनानि जातानि? नितम्बयोराधिक्यम्? त्रयश्चत्वारो वा नितम्बा जाताः? कोऽर्थः? आधिक्यस्य तथैवार्थद्वयात् ॥ ११ ॥

नवललनातनुजनपदे यौवनसामन्तेन ।
कृतं वस्तु लघु गुरुतरम्, गुरु लघु कृतं बलेन ॥ १२ ॥

नवललनायाः तनुरूपे जनपदे देशे, यौवनरूपेण सामन्तेन प्रान्ताधिपतिनादृष्यीयते राज्ञा, (कामचक्रवर्तिनाधीनेन) बलेन बलात्कारेण (बलात्कारेणापि चापल) यद्वस्तु लघु तद् गुरुतरं कृतम् । यद् गुरु वस्तु आसीत्, तल्लघु कृतमिति सर्वत्र विशृङ्खला कृता । यथा नः कश्चित् शासको यदि देशेऽधिकारं प्राप्नोति, स च यदि बलात्कारे प्रवृत्तो भवति तदा, येषां भूम्यधिकारिणां द्वेषः क्रोधो न्यूनो भवति तं पर्यंस्थितं शासनं करोति येषां च द्वेषोऽधिको भवति तम् (उत्कोचं गृहीत्वा) न्यूनं करोति । तथा च तान् भूम्यधिकृतानुच्छ्रययति एवं यौवनेन स्तननितम्बादीनां लघुत्वेऽपि गौरवमासादितम् । कटिमध्यादेः पूर्वं गौरवेऽपि, गुरुत्वं लघुत्वं सम्पादितमित्याशयः । अत्रापि परमानन्दः 'यदि यौवनदेशाधिपस्तल्लीपुरे ततास । तत्र गौरवं दधिरे रचयामास ।' यदि चेदेवं स्यादिति संभावनास्ति, तत यौवनसामन्त आगतः? तत्र तल्लीपुरे गौरवं लाघवं रचयामास । अर्थात् लघुतल्लीपुरं गुरु चकार, गुरु तल्लीपुरं लघु चकार! सम्भवः तल्लीपुरस्य मध्यवर्तीक्षको भवान् ॥ १२ ॥

यथा यथा स्तनपरिमितिर्यौवनशुचिद्दिवसेऽगति ।
वृद्धिमयति, कटिरजनिरपि तथा तथा क्षयमेति ॥ १३ ॥

यौवनरूपस्य शुचेर्ग्रीष्मस्य दिवसे । "ज्येष्ठे शुक्रः शुचिस्त्वयम्" अमरः । यथा यथा स्तनरूपा परिमितिर्दिनमानम्, अति अत्यन्तं वृद्धिम्,

'नव नागरि तन-मुलुक लहि जोबन-आमिल जोर ।
घटि बढ़ि तैं बढ़ि घटि रकम करी औरही और ॥ १२ ॥'
'ज्यौं ज्यौं जोबन-जेठ-दिन कुच मिति अति अधिकात ।
त्यौं त्यौं छनछन कटि छपा छीन परत नित जात ॥ १३ ॥'

भवति (याति), तथा तथा कटिरूपा रात्रिः क्षयं गच्छति । ज्येष्ठमासे प्रतिदिनं दिनमानं वर्धते सर्वतोऽधिकं च वृद्धिं याति, रात्रिस्तु प्रतिदिनं क्षीयते । एवमेव यौवनरूपे ज्येष्ठमासे कुचरूपस्य दिनस्य मानं (परिमाणम् आकारः) क्रमशो वर्द्धते । रात्रिवत् कटिस्तु अत्यन्तं क्षीयते । अहो! मदनोष्मसमयेन यौवनेन सह प्रचण्डज्येष्ठस्य रूपणं सम्यगेव ॥ १३ ॥

उरसिजभारो भवदुरसि यौवनभरतो भाति ।
सरति सपत्नीहृदि, भराच्छ्वासः कठिनतयाऽति ॥ १४ ॥

हे सखि! भवत्याः उरसि, यौवनभरात् (पूर्णयौवनात्) उरसिजयोः भारः (पूर्णता) भाति, तस्य भारात् सपत्नीनां हृदये, श्वासः अतिकठिनतया सरति आगच्छति । मांसलयोः कुचयोर्भरस्तव हृदये भाति । परं तद्भारस्य खेदात् सपत्नीनां हृदये श्वासः, अनिर्हेतात् प्रतिक्षणं रुध्यमान इवागच्छतीत्यसङ्गतिः । मूले यथा तन्त्राङ्कहारस्यधैर्यदाग्ग्यवरोधः । नायिकां प्रति सख्या उक्तिः ॥ १४ ॥

ज्ञातयौवना मुग्धा

मांसलतामनुगतमिदं किञ्चिदङ्कुरितकेन ।
निभालयति बालाऽविरतमुरो हारकपटेन ॥ १५ ॥

किञ्चिदङ्कुरितकेन किञ्चित् कुचयोरङ्कुरणेन, स्वार्थे कन् । मांसलतामनुगतम्, किञ्चिन्मांसलतां प्रति अवतीर्णम् । स्पष्टं कुचयोरङ्कुरणं न जातं किन्तु उरसि किञ्चिन्मांसलता आरब्धेत्याशयः । एतादृशम् उरः (वक्षःस्थलम्) सा बाला, मुक्तानिर्मितस्य हारस्य दर्शनव्याजेन अविरतं पश्यति । अङ्कुरितकुचं स्वं वक्षः स्वयं नायिका पश्यति, परं किं पश्यसीति सखीभिः पृष्टे सति, हारदर्शनेन, तदपह्नुते इत्याशयः । सौन्दर्यमिदं नायकं प्रति सख्या उक्तिः ॥१५॥

---

'बाढ़त तौ उर उरजभर भर तरुनई विकास ।
बोझनि सौतनि कैं हिये आवत रूँधि उसास ॥ १४ ॥'
'भावक उभरौहौं भयो, कछुक पर्यो भरुआय ।
सीपहरा कैं मिस हियो निसदिन हेरत जाय ॥ १५ ॥'

## नवोढा मुग्धा

वधूवपुषि यौवनविभा यथा यथा समुदेति ।
सकलसपत्नीमुखविभा तथा तथा क्षतिमेति ॥ १६ ॥

नववध्वाः शरीरे यौवनस्य द्युतिः यथा यथा सम्यक् उदेति, वर्धते । तथा तथा सकलसपत्नीनां मुखकान्तिः क्षीणा भवति । एतादृशीं नवयौवनां विहाय, अस्मास्वयं दयितः प्रणयेतेति सपत्न्यो विषीदन्तीत्यर्थः ॥ १६ ॥

नववधु! तव मुखदर्शने श्वश्र्वा गृहमचिरेण ।
सपत्नीभिरपि सौभगं दत्तं मनः प्रियेण ॥ १७ ॥

नायिकां प्रति सख्याः सपरिहासमुक्तिः—हे नवोढे! तव मुखदर्शनोपलक्ष्ये, श्वश्र्वा (प्रियतमजनन्या), गृहम्, प्रियतमेन मनः, सपत्नीभिः आत्मनः सौभाग्यम् दत्तम् । नववधूर्यदा पतिगृहे प्रथमप्रथममायाति, तदा आत्मीयजनाः प्रथममुखदर्शने नववध्वै किञ्चिदुपहारं ददति ('मुख दिखावनी')। तदेवाह—यद् त्वां रूपगुणशालिनीं विलोक्यैव श्वश्र्वा स्वकीयं सर्वं गृहकर्तृत्वं समर्पितवती । प्रियस्तु मुखदर्शन एव सर्वस्वं स्वमनस्तुभ्यं दत्तवान् । सपत्नीनां सन्निधौ न गृहभार आसीत् । नापि मनः, तत्तु प्रियतमसादासीत् । अत एव प्रियतमकृतं यत्सौभाग्यं (पतिप्रेम) आसीत्तदेव दत्तम् । अर्थात् अग्रे प्रियतमस्त्वामेव दयितां करिष्यति, वयं तु दर्शनमात्रेऽपि कस्यापि देयाधिकारिण्यो भविष्याम इति । सम्यक् सर्वा प्रत्युक्तौ तु—'नववध्वा मुखदर्शने' इति पाठः । नववध्वा इति षष्ठी ॥ १७ ॥

---

'दिन दूनी दुलही बढ़ै ज्यौं ज्यौं जोबन जोति ।
त्यौं त्यौं सखि सौतैं सबै बदन मलिनदुति होति ॥ १६ ॥'

'नवबधू मुखदिखरावनी दुलहिनि करि अनुराग ।
सासु सदन मन ललन हू सौतिनि दियौ सुहाग ॥ १७ ॥'

—✻ सलज्जा मध्या ✻—

रते हरति वसनं प्रिये, दीपे ज्वलति पुरोऽपि ।
उदितदेहदीप्तित्विषा, ह्रीरियमतुलमगोपि ॥ १८ ॥

सुरते, प्रियतमे वसनमपनयति सति, पुरः संमुखे दीपे ज्वलति अपि। दीपकस्य प्रकाशेऽपीत्यर्थः। वस्त्रापनयनेन उदितया, सम्यक् प्रसृतया देहदीप्तेः देहशोभायाः, त्विषा प्रसरणशीलेन प्रकाशेन, वस्त्रापहरणसमये गच्छन्ती इयं ह्रीः लज्जा, अतुलम् अनुपमम् (सम्यक् यथा स्यात्तथा) अगोपि रक्षिता। यतो शरीरादपसरन्त्येव नायिकायाः शरीरकान्तेरेकैकतः प्रकाशस्तस्याः शरीरमाच्छादयामास, येन नायकस्य दृष्टिस्तस्मिन् न सम्यक्पतितुं शशाक। अत एव लज्जा सुरक्षिताऽभवदित्यर्थः॥ १८॥

✻ समानलज्जाकामा मध्या ✻

त्यजति न लज्जां लालसां पितृसदने प्रियमेक्ष्य ।
ससंकोचरति लोचनं ताम्यति रीतिमपेक्ष्य ॥ १९ ॥

पितृगृहे प्राप्तम्, प्रियम् आ—ईक्ष्य, लज्जामपि न त्यजति, लालसामपि न मुञ्चति। जनकगृहे स्थिता कथं लज्जां विहाय प्रियं पश्येदिति लज्जा। रात्रिंदिवा यस्य हृदि ध्यानमासीत्स एव प्राणवल्लभः समायात इति दर्शनलालसा। उभयमपि समानबलत्वान्न त्यक्तुं शक्यत इत्यर्थः। अतएव—संकोचः, रतिः (स्नेहः) आभ्यां सहितं लोचनम्, पितृगृहनिवासस्य सलज्जां रीतिं अपेक्ष्य अनुरुध्य, ताम्यति व्याकुलं भवति। एकवचनमुपलक्षणमात्रम्। द्वयोर्नेत्रयोरभिप्रायः॥ १९॥

---

'दीप उजेरेहू पतिहि हरत बसन रतिकाज।
रही लपटि छबि की छटनि, नैकौ छुटी न लाज॥ १८॥'
'छुटै न लाज न लालचौ प्यौ लखि नैहर गेह।
सटपटात लोचन खरे, भरे सँकोच सनेह॥ १९॥'

### समदनोन्मादा प्रौढा

वीक्ष्य मानशयितां प्रियो दयितामनु सुष्वाप ।
स्वप्नमिलनमिषतः प्रियाहृदयालिङ्गनमाप ॥ २० ॥

प्रियः, प्रियां मानकोपात् शयितां वीक्ष्य, दयितामनु दयितायाः समीपे सुष्वाप। अनुनयं स्वीकुर्यात् वा इति विचार्य तस्याः समीपे प्रियः सुष्वापेत्यर्थः। प्रिया, स्वप्ने सम्मिलनम् (अर्थात् शयानया नायिकया कश्चित्स्वप्नो दृष्टोऽस्ति, तस्मिन्नेव सा मिलतीति) मेलनस्य मिषात्, प्रियतमस्य हृदयालिङ्गनं प्राप। 'पुनरपि मिलनं तथा कदाचिदितिपत्, गाङ्कुटादिभ्योऽरितिसूत्रे कुटसादिः कुटादिरिति कृत्वा मिलनमिति आपामापुर्यानुरोधात्स्वीकार्यम्। दयितोऽपि मानुनीतवान्। इयमपि 'विनाऽनुनयं मानत्यक्त' इति लज्जाभयं नाङ्गीचकार, सुप्तया सर्वं कार्यं साधितमनीत्यर्थः ॥ २० ॥

### कुलवधूः

वदति न देवरदुर्मतिं कुलजा कलहभयेन ।
मार्जारान्तिकपञ्जरे शुकीव शुष्यति तेन ॥ २१ ॥

निजोपरि आसक्तो देवरः कामातुरतया यां दुर्मतिं धत्ते, तां कुलोत्पन्ना सा, द्वयोर्भ्रात्रोर्मध्ये कलहो भवेदिति भयेन न कथयति। तेन, एतेन हृदयमध्य एव सदनरूपेण, दुःखस्य गुरुत्वेन। मार्जारस्य अन्तिके स्थापितो यः पञ्जरस्तस्मिन् स्थिता शुकी इव, प्रतिदिनं शुष्यति कृशा भवति ॥ २१ ॥

---

'सोवत लखि मन मान धरि, ढिग सोयो प्यौ आय।
रही सुपनकी मिलन मिलि तिय हियसौं लपटाय ॥ २० ॥'

'कहति न देवरकी कुमति कुलतिय कलह डराय।
पंजरगत मंजार ढिग सुकलौं सूकति जाय ॥ २१ ॥'

—॥ प्रेमगर्विता परकीया ॥—

पदलग्नं कण्टकमिदं म्रियमाणामवति स्म।
प्रीतिमञ्जयन् भीतितः प्रियो यदपनयति स्म॥ २२॥

पदे लग्नमिदं कण्टकम्, म्रियमाणां माम् रक्षितवत्। यदीदं पदे नालगिष्यत् तर्हि विरहविकलाऽहं अमरिष्यम्। यस्माद्धि प्रीतिं प्रकाशयन्, भीतितः भयपूर्वकं प्रियतमो यत् कण्टकं अपनीतवान्। कंटकोद्धारव्याजेन अङ्के नायिकापादग्रहणे नायकेन समारोपितः, सा च प्रियाङ्गसंस्पर्शमवाप्य विरहकष्टं विशोधितवती। अत एव कण्टकं म्रियमाणां नायिकां जीवयामासेत्याशयः। अहो पुष्पादप्यतिशिरीषकोमलाङ्ग्याः कण्टकव्यथा जाता इत्यादि प्रेमप्रकाशनम्। कण्टकोद्धारसमये—कण्टकाग्रं पदे न त्रुटेत्-निःसारणे च कोमलाङ्ग्यास्तस्या व्यथा न भवेदिति भयप्रकाशनम्॥ २२॥

वदति निषिध्यति रज्यति, द्वेष्टि मिलति जिह्रेति।
सदने बहुलजनेऽपि सा, नयनेनाऽऽलपतीव॥ २३॥

नयनद्वारा किञ्चित्कथयति, किञ्चिन्निषिध्यति। प्रेमाणं प्रकाशयति। द्वेष्टि, रुष्टा भूत्वा प्रेमप्रतिषेधं करोतीत्यर्थः। एवं जनसंकुलेऽपि भवने, गुप्तया सा नयनद्वारा वार्तालापमिव करोति। इयं नायिकायाश्चेष्टा, एवमेव नायकोऽपि वदति निषिध्यति०। इति द्वावपि नयनेनाऽऽलपतः, इति द्विपक्षाभिप्रायो विहारिणः एकवचनेन प्रदर्शितः॥ २३॥

---

'इहि काँटे मो पाय गड़ि लीनी मरति जियाय।
प्रीति जतावत भीति सौं मीत जु काढ्यो आय॥ २२॥'
'कहत नटत रीझत खिझत मिलत खिलत लजियात।
भरे भौन में करत हैं नैननि ही सब बात॥ २३॥'

—नदीतटे नायिकया मेलनम्—

स्नात्वा सा परिधाय पटमनमत्तिलकमिषेण ।
प्रियमाज्ञाप्य गृहानगाच्चलदृक्प्रसरेण ॥ २४ ॥

यदा नायिका यमुनायां स्नाति स्म, तदैव रसिकवरः श्रीकृष्णस्तत्रागतः । क्रियाविदग्धा सापि स्नात्वा, वस्त्रं परिधाय, तिलकरचनस्य मिषेण, हस्तयो-रुत्थापनद्वारा प्रियम् अनमत् । अथवा, यमुनातटे घट्टोपरि देवमूर्तीनामग्रतः तिलकसामग्रीमादर्शादिकं च नीत्वा बहवो देवलकास्तिष्ठन्ति । ते कृतस्ना-नेभ्यो जनेभ्यस्तिलकं ददति, तद्दत्तं ताम्रखण्डादिकं च गृह्णन्ति । तथा च नायिका पूर्वं देवलकसकाशात् अवनता भूत्वा तिलकग्रहणव्याजेन नायकं प्रणनामेति भावः । पश्चात् दृक्प्रसरेण (कटाक्षेण) गन्तुं प्रियमाज्ञाप्य अनुमतिं दत्वा, निजगृहानगमत् । इह सर्वजनसंकुले कालिन्दीकूले तु कुतो कुरु । इदानीं गृहमेव याहि, अहं तत्रैवागच्छामीति नायकमाज्ञापितवतीत्या-शयः ॥ २४ ॥

—वाग्विदग्धा स्वयंदूतिका—

क्षणमातपमपनय पथिक ! मिलदलिपुञ्जमवेहि ।
यमुनातीरतमालगतमालतिकुञ्जमुपेहि ॥ २५ ॥

पथिक ! मार्गचलनपरिश्रान्त ! क्षणमात्रम् आतपं निवारय । अपेहि ग्लानिं, किं ते दिनकरकिरणैः निवारय । किं बहु, तस्मात्—यमुनातीरे यस्त-मालस्तस्मिन् गता (अर्थात् तमालवृक्षेण सहाश्लिष्टा या मालतीलता तस्याः कुञ्जम्, सौरभ्यगात् मिलन्तः अलिपुञ्जा यस्मिंस्तादृशमिमं संकुञ्जमुपेहि

---

'न्हाय पहिरि पट, उठि कियो बेंदी मिस परनाम ।
दृग चलाय घर कों चली बिदा किये घनस्याम ॥ २४ ॥'
'घाम घरीक निवारिये कलित ललित अलिपुंज ।
जमुनातीर तमाल तरु मिलित मालती कुंज ॥ २५ ॥'

आगच्छ । आतपक्लान्तस्त्वं यदि शीतलं सुगन्धं तमालमालतीभ्यामाच्छादितत्वात्स्वच्छं स्थानं सांप्रतं गमिष्यति, तर्हि न कोऽप्यन्यथा ज्ञास्यति । अहमपि च तत्रायास्यामीति व्यङ्ग्यम् । किञ्च यथा तमालेन सह मालत्याश्लिष्टा एवमावयोरपि सङ्गो भवेदिति 'तमालगतमालती'पदेन स्वाभिप्रायो ध्वनितः । मूले छेक-वृत्त्यनुप्रास एव इहोत्तरार्द्धे–'तमाल' 'त–माल'ति कुञ्जेति यमकोऽपि ॥ २५ ॥

→※ नायिकानायकयोर्मिथो दर्शनम् ※←

अधिगृहमाबद्धामचलदृष्टिरज्जुमारुह्य ।
इतस्ततश्चेतो द्वयोरटति नट इवागृह्य ॥ २६ ॥

नायिकानायकौ स्वस्वसौधोपरि स्थितौ मिथः पश्यतस्तदाह–अधिगृहम् गृहे ( गृहोपरि ) आबद्धाम्–अचलाम् दृष्टिरूपां रज्जुमारुह्य, द्वयोरपि चेतः, आगृह्य आग्रहपुरस्सरं निर्भयमित्यर्थः । नट इव इतस्ततः अटति । नटो यथा निर्भयः सन् रज्जुपर्यन्तं भ्रमति, एवं द्वयोरपि मानसं परस्परावद्धां दृष्टिमवलम्ब्य इतस्ततो गच्छति । न भयं करोति । इतस्तत इत्यस्याभिप्रायः–नायकस्य मनो नायिकापर्यन्तं गच्छति पुनर्लोकसंकोचात्परावर्तते, एवं नायिकाया अपि मनो नायकपर्यन्तं याति, पुनः संकोचात्परावृत्त्यायातीति नटसाम्याय ॥ २६ ॥

द्वयोरमिलतां लोचने न निरुद्धे वसनेन ।
सैन्यवृन्दमभिभूयते लघुनासीरबलेन ॥ २७ ॥

नायिकानायकयोर्द्वयोः लोचने ससम्भ्रमम् अमिलताम् परस्परमुपयेताम् । सूक्ष्मेण वसनेन न निरुद्धे अभूताम् । नायिकायाः मुखावगुण्ठनमतिसूक्ष्म·

'दीठि बरत बाँधी अटनि चढ़ि दौरत न डरात ।
इत उत तैं चित दुहुँनके नट लौं आवत जात ॥ २६ ॥'
'जुरे दुहुनिके दग झमकि रुके न झीने चीर ।
हलकी फौज हरौल ज्यों परत गोलपर भीर ॥ २७ ॥'

मासीत्, अत एव सूक्ष्मपटं भित्त्वा नायिकाया नेत्रे, नायकनेत्राभ्यां सह· घटितावुत्स्थेताम्, इत्याशयः। दृष्टान्तमाह—लघुना स्वल्पशक्तिना नासीर-बलेन अग्रसरसैन्येन ( हेतुभूतेन ), प्रधानं सैन्यवृन्दम् अभिभूयते आक्र-म्यते।- यदि अग्रे वर्तमानं रक्षकसैन्यं न्यूनं निर्बलं च भवेत्तर्हि, पृष्ठस्थितं प्रधानसैन्यं प्रतिपक्षेण पराभूयते। अत्रापि नायिकायाः अवगुण्ठनवस्त्ररूपं रक्षकसैन्यमतिसूक्ष्ममासीदत एव, पृष्ठस्थिते प्रधानसैन्यभूते लोचने युद्ध-संरम्भः समापतित इत्याशयः। 'भित्त्वा पटमपि दृशोरलभत यदनु-यानि'। इति परमानन्दः। यद्यनसुखानि, यद्नायकलोकनसुखानीति कथ-यितुं कृतेपि–परस्परं युद्धघटनावसरे युद्धपदेन कथमं प्रकृतानुपयोगि। यदि युद्धमेवासीत् तर्हि–पटद्वारा रक्षणस्य काऽप्यदृश्यकताभूत्? ॥ २७ ॥

अभयमयति रणसुभट इव, कोपि न तद्रुणाति।
स्थले लक्षजनसंकुलेऽप्यक्षि लक्ष्यमुपयाति ॥ २८ ॥

रणशूर इव नेत्रं निर्भयं यथा स्यात्तथा, अयमि गच्छति। तत् (नेत्रम्) कोपि जनो न निरोद्धुं शक्नोति। लक्षजनसंकुलेऽपि स्थले, अक्षि (नेत्रम्) लक्ष्यं (यद् आत्मनो निरीक्षणीयं भवति, तत्) उपयाति प्राप्नोति। नायिकानायकयो-रुभयोर्नेत्रयोः परस्परमर्पणस्य संकथेयम्। 'अक्षियुगं हरिणाक्षि तव गच्छति मधुपतिमेव' इति केवलं नायिकानेत्रमेव पश्यतो परमानन्दः ॥ २८ ॥

सलज्जेव सा शशिमुखी मुखमवगुण्ठ्य पटेन।
दहनलतेव गता द्रुतं मामवेक्ष्य चकितेन ॥ २९ ॥

वास्तवे तस्य लज्जा ( दर्शनलालसत्वात् ) नासीत्तथापि सलज्जा इव सा चन्द्रमुखी, पटेन मुखं पिधाय, चकितेन ( सहसा, अतर्कितं

---

'पहुँचति डटि रन-सुभट लौं रोक सकै सब नाहिं।
लाखन हूं की भीरिमें आँखि वहीं चलि जाहिं ॥ १८ ॥'
'घरघराति सी ससिमुखी मुख घूंघटपट ढाँकि।
पावक झरसी झमकिकै गई झरोखौं झाँकि ॥ २९ ॥'

मानकरणार्थं यावान् दोषः (नायकस्य) इष्यते अन्विष्यते, मनसि गुण एव आगच्छति। दोषान्वेषणार्थं यावन्नायकचरित्रं विचारयामि तावदेव तस्य प्रत्येकवार्तासु गुणमेव पश्यामीत्याशयः ॥ परमानन्दस्तु–'मानस्त्वयि रजनीदिनं न हि निश्चलतामेति। प्रिये विचिन्वति तेऽगुणे तदस्ते गुण एति ॥' इति प्रहेलिकामाह। यदि सखी नायकं प्रत्युक्तिरपि स्यात्तर्हि 'तव अगुणे दुर्वाक्यादिके विचिन्वति सति' इति व्याख्यायां अन्वेषकं दुर्बोधमस्ति, उत नायिकादिभिन्नपदार्थः। अगुणे इति सप्तम्याः स्थाने द्वितीयां कृत्वा यस्मिन् कस्मिन्नपि जने तव 'अपगुणं विचिन्वति सति' इत्यर्थः क्रियते, तर्हि प्रिये इत्यस्य कथं संगतिः। सर्वो जनः 'प्रिय' इति व्यपदेशं कथं कुर्यात्। नायिकायाः प्रियः सर्वस्य प्रियो भवेदिति बलात्कारो नास्ति। यदि नायिका अन्वेषणस्य कर्त्री तदा 'विचिन्वति सति' इति पुंस्त्वं कथं घटेत? 'प्रिये नायके, तव अगुणं विचिन्वति' इति द्वितीयपक्षार्थस्य व्याख्यापि न संगच्छते, मानरूपेच्छा नायकस्यास्ति उत नायिकायाः। यदि नायकस्यैव एव मानालीलां कर्तुमुत्सुकोऽस्ति, तर्हि विहारी भ्रान्त, येन हि नायिकाया एव मानमुद्दिश्य पद्यमिदं प्रोक्तमित्यलम् ॥ ११ ॥

—॥ प्रेमगर्विता ॥—

तिलकमकृत कम्पितकरः प्रियश्चिबुकमुत्थाप्य ।
कुटिलमटति साऽलिकतटे कुटिलतिलकमेवाप्य ॥ १२ ॥

सात्त्विकोद्रेकात्कम्पितौ करौ यस्य ईदृशः प्रियः, नायिकायाश्चिबुकमुत्थाप्य, तिलकम् अकृत, अकार्षीत्। सा गर्विता नायिका, अलिके ललाटे कुटिलं वक्रं आत्मीयं तिलकमेव आ-आप्य गर्वेण वक्रं यथा स्यात्तथा भ्रमति। परमानन्दस्तु 'विहरति कुटिलहृतेव।' इति 'कुटिलीकृत्वा' इत्यर्थे व्याचष्टाप्यम् ॥ १२ ॥

---

'छिनौ सु चिबुक उठाय करि कंपित करि भरतार।
टेढ़ी पै टेढ़ो फिरै टेढ़े तिलक लिलार ॥ १२ ॥'

## ❀ लक्षिता ❀

गतिरपरा, द्युतिरपि परा मुखे, चोक्तिरपरैव ।
प्रियहृदयारूढां वदति रूढा भ्रुकुटिलैव ॥ ३३ ॥

मुखे द्युतिरपि परा । पूर्वं या नासीत्सा । उक्तिरपि अपरैव । वचनान्यपि सर्वथ्यप्रकारान्यन्यान्येव वदसि । हे सखि ! ते अभिमानेन रूढा भ्रुकुटिलैव, त्वाम्–एषु दिनेषु प्रियहृदये आरूढां वदति । नायिकां प्रति सख्या उक्तिः ॥ ३३ ॥

## —❀ खण्डिता ❀—

पक्ष्मसु वीटिरसोऽधरेऽञ्जनमलक्तमलिकेऽस्ति ।
रुचिररङ्गतः सङ्गतः सुस्वागतमिह तेऽस्ति ॥ ३४ ॥

नायिकाकर्तृकनेत्रचुम्बनात्पक्ष्मसु ताम्बूलरसः, स्वकृतनेत्रचुम्बनात् अधरे कज्जलम्, ललाटे अलक्तकम्, अस्ति । यद् अधररञ्जकं तन्नेत्रयोः, यन्नेत्ररञ्जकं तदधरे, यत्पादरञ्जकं तच्छिरसि, एवं विचित्रसज्जतया रुचिरेण रङ्गेण मम संगतो भवान् । तेऽद्य सुस्वागतम् अस्ति । रुचिरेति विपरीतलक्षणया नायकं प्रत्यारोपाय । स्वागतमपि साकूतम् ॥ ३४ ॥

## —❀ प्रोषितपतिका ❀—

करपरिमर्दितकुसुममिव विह्वलिता विरहेण ।
सततसमीपसखीभिरपि परिचीयेत चिरेण ॥ ३५ ॥

---

'औरै गति औरै बचन भयो बदन रँग और ।
द्यौसक तें पिय चित चढ़ी कहै चढ़ी है त्योर ॥ ३३ ॥'
'दृग न पीक अंजन अधर, धरे महावर भाल ।
आजु मिले सु भली करी, भले बने हो लाल ॥ ३४ ॥'
'कर के मीड़े कुसुम लौं गई बिरह कुम्हिलाय ।
सदा समीपिनि सखिनि हूँ, नीठि पिछानी जाय ॥ ३५ ॥'

करेण परिमर्दितं बलवदुन्मथितं कुसुममिव, विरहेण उन्मथिता सा । सततं समीपस्थायिनीभिः सखीभिरपि, सैवेयमिति चिरेण (कथमपि) प्रत्यभिज्ञायेत । उन्मथिततया पिण्डिताकारं कुसुमं यथा चतुरोऽपि जनः अमुकमिति प्रत्यभिज्ञातुं न पारयेत् । एवं कुसुमकोमला सापि, व्याधिदलया पूर्वमुन्मथिता, यथा सहचर्योऽपि न तां सहसा परिचिन्वन्तीत्याशयः ॥ ३५ ॥

अवधिदिने व्यतियाति विकलहृदया त्वासीदिव ।
कुसुमितमेत्य रसालमियमुन्ममाद भृशमेव ॥ ३६ ॥

अवधिदिने व्यतिगच्छति सति, इयं विकलहृदया तु आसीदेव, इदानीम् रसालम् (आम्रम्) कुसुमितम् आ–इत्य, भृशमेव उन्ममाद । सोमितं वसन्तागमनेनोद्दीपितविरहा अतीव विकलतया उन्मत्ता जातेत्याशयः । अत्र 'अवधिदिनेऽतीतेव सा कृशतरतनुरपरेव । दृष्ट्वा मुकुलकलिकाभिरपि विलसन्ति विकलतरेव ॥' इति परमानन्दः । 'टरी औधिदि नाम' 'अवधिर्व्यतीत इति नाम श्रुत्वैव'।। तात्कालिकेऽर्थे 'अवधिदिने अतीते' इति भूतकालप्रयोगः स्पष्टः । 'हिय औरैं सी ह्वै गई' इत्यस्य 'हृदये अन्यथेव (अस्वाभाविकविपर्यासयुक्त) जाता' इत्यर्थेऽपि 'कृशतरतनुः अपरा इव जाता' इति वदन् काठिन्यकरणात् शरीरेणापरिचेया जाता' इति हृदयस्थाने शरीरकथां प्रकरोति । किञ्च, ततोऽपि 'विकलतरा इव' न विकलतरा किन्तु विकलतरा इव दृश्यमाना इति इवशब्देन सर्वं कलुषयति । म्रियमाणाया अपि 'विलसन्ति' शब्दम् विरुणद्धि ॥ ३६ ॥

—※ विरहे तापः ※—

अगहत तनुतापम्, वहन् शिशिरे शिशिरं यन्तु ।
पापमभूत्प्रविवेशिनो ग्रीष्मदिवसवासस्तु ॥ ३७ ॥

---

'हिय औरै सी ह्वै गई टरी औधि कैं नाम ।
दूजे कर डारी खरी बौरी बौरे आम ॥ ३६ ॥'

'सीरैं जतननि सिसिर रितु, सहि बिरहिनि-तन-ताप ।
बसिबे कौं ग्रीषम दिनन परौ परोसिनि पाप ॥ ३७ ॥'

विरहिण्याः प्रतिवेशी जनः, शिशिरर्तौ हिमकर्पूरादिशीतलं वस्तु, वहन् उपयोगे नयन् सन्, समीपे वसन्त्याः तस्या विरहिण्याः तनुतापं ( वस्त्रा-स्पर्शनद्वारा प्राप्यमाणं शरीरोत्तापम् ) कथञ्चित् असह्यं सोढवान्। ग्रीष्म-दिवसानां ( न रात्रीणामपि । तत्र कदाचित् शैत्यमपि स्यात् ) वासस्तु [ अस्या विरहिण्याः प्रतिवेशे निवासस्तु ] प्रतिवेशिनो जनस्य पक्षे पापमे-वाऽभूत्। इदानीं प्रतिवेशिनोऽपि तत्र वस्तुं न शक्नुवन्तीति विरहसंतापस्य पराकाष्ठा। नायकं प्रति सखीकृतं नायिकाविरहनिवेदनमिदम्। "हिमरजनी हिमजलकर्णरदपवसतामपयाति। अधुना तपनदिनेषु तत्काठिन्यं प्रतिभाति।" इति परमानन्दः। हिमजलकणद्वारा उपवसतां (उपवासं कुर्वताम्) कष्टायता हिमरात्रिर्व्यतीता, तदा ग्रीष्मदिनेषु काठिन्यं सम्पन्नमेव। 'तत्काठिन्यम्', तत्र कस्य काठिन्यम्? अपोष्य एवार्थस्य। उपवासी 'प्रतिवेशी' इति तु निदर्शनार्थमेव ॥ ३७ ॥

घनतरशीतनिशास्वपि च वसनमार्द्रमपिधाय ।
साहसेन संनिधिमयति सखीजनः स्नेहाय ॥ ३८ ॥

घनतरं शीतं यासु, एवंविधासु शीतर्तुनिशास्वपि, ज्वालाया निवारणार्थम् अग्रे आर्द्रं वसनम् आच्छाद्य, स्नेहाय ( स्नेहकारणात् ) सखीजनः, साहसं कृत्वा तस्याः विरहिण्याः संनिधिं गच्छति। तस्याः शरीरात् यथा ज्वाला निःसरति यथार्द्रवसनमग्रे कृत्वा अतिसाहसं कृत्वैव सख्यो गच्छन्ति, अन्यथा को वा गन्तुं पारयेदिति सख्या नायकं प्रत्युक्तिः। 'हिमसमयामपि मधुपते! सगाहसमग्रेहापि। तदुपसर्पणं न क्षमा सखी मजलवसनापि ॥' इति परमानन्दानुवादः किमनुसुन्दर इति रसिका सहृदयैरेव। 'तत् धाम उपसर्पा-नुमिति' सटीका ॥ ३८ ॥

प्रयसखनयत्प्रियतमः सर्वसुखानि सहैव ।
शिशिरनिशां नैदाघदिनमदधान्मां समर्प्य ॥ ३९ ॥

---

'आँटे दै आले बसन, जाड़े हूँ की राति ।
साहस कै कै नेह बस सखी सबै ढिग जाति ॥ ३८ ॥'
'चलत चलत लौं लै चले, सब सुख संग लगाय ।
ग्रीषम बासर सिसिर निसि, पिय मो पास बसाय ॥ ३९ ॥'

विरहिणी सखीं प्रति वक्ति—प्रवासार्थं गच्छन् प्रियतमः सर्वाणि जीवनस्य सुखानि सदैव नीतवान् । शिशिरर्तोः रात्रिम्, नैदाघं दिनं च, मां समया एव मत्समीप एव, अदधात् अस्थापयत् । शिशिरर्तोः रात्रौ ग्रीष्मदिनमस्थापयत्, अर्थात् शीतरात्रिरपि विरहोत्तापाद् ग्रीष्मर्तोर्दिवस इव संतापकरी दीर्घा च प्रतीयते । निदाघदिने शीतरात्रिम् अदधात् । अर्थात् ग्रीष्मेऽपि कामवशात्कम्पमनुभवामि इत्याशयः । अथवा—इदानीं मम रात्रयः शिशिरर्तोः सन्ति ( अतिदीर्घाः ) दिवसाश्च निदाघस्य सन्ति, ( विरहक्लेशादतिदीर्घा जाताः ) इति सामान्यार्थः । 'नीरवा सर्वसुखानि च गच्छसि रमणसहैव । शिशिरनिदाघनिशादिने त्वके कथमस्मैव ।" इति परमानन्दः । सखिं प्रति नायकं प्रति नायिकाया उक्तिः । यावत्कालं रात्रिदिने न यापिते तावत्, रात्रिः शिशिरस्य, दिनं निदाघयोरपि अनुभव. कविप्रसिद्धविरहवर्णनानुकारित्वपात्स्वाभाविक एव । 'त्वके' इति मूलकाव्येऽपि विरुद्धः । यदा सखिं प्रति 'गच्छसि' इत्युच्यते तदा रात्रिदिने त्वके इति कथं ज्ञातम्? *परमानन्दानुवादे विहारिसतसईमिव रात्रिदिनमनुगमनमपि नवोढेयं को* जानीयात् ॥ ३९ ॥

अहमेवोन्मादं गता ग्रामो वा नु जगाम ।
किमवबुध्य सोयं दिशति शशिनि शीतकरनाम ॥ ४० ॥

विरहवशात् अहमेव उन्मादं गता, किंवा सर्वो ग्रामो नु उन्मादं जगाम? योऽयं ग्रामः, किं ज्ञात्वा चन्द्रे शीतकरोऽपि नाम दिशति ब्रूते । यतो ह्ययं तापकारकेऽस्मिन्नर्थे शीतकरत्वमित्याशयः । 'किन्नु मया प्राप्ते उता मत्ता किं त्वहमेव । ये वदन्ति सर्वे शशिं सुधा शिशिरकरमेव ॥' इति परमानन्दः मत्ता किं त्वहमेवोन्मत्तेन, अहं मत्ता अथवा ग्राम एव चन्द्रतापमनुभवन्ति इत्यर्थो निधीयते । न तथा बिहारी वाञ्छति । 'शशिन्' इत्यपि स्वं योग्योपमाकरणमात्रम् ॥ ४० ॥

---

'हौं ही बौरी बिरह बस, कै बौरो सब गाम ।
कहा जानि ये कहत हैं ससिहिं सीतकर नाम ॥ ४० ॥'

## सोरठा

विरहे शुष्यति देह, इतः स्नेह उपचयमयति ।
वर्षति यदि मघवेह, यासो ह्रसतिः, यवाः स्थिराः ॥४१॥

विरहे देहः शुष्यति, परम् अपरतः स्नेहो वृद्धिम् याति । यदि इह (जगति) मघवा मेघो वर्षति तर्हि यवासः ('जवासा') ह्रसति शुष्यति । यवाः स्थिराः पुष्टा भवन्ति ॥ ४१ ॥

दो०–विरहपावके प्लुष्यते, वहति विलोचनवारि ।
श्वासमरुति चोड्डीयते चित्तमहर्निशचारि ॥ ४२ ॥

अहर्निशं चरति चैचल्याद् भ्रमति इदमविरलमेकं मे हृदयम्, विरहाग्नौ पच्यते ज्वलति । विलोचनयोः वारि वारिणि जले । 'वार्' शब्दस्य सप्तमी । वहति, पक्षात् प्रवाह निपतमन्यत्र नीयते । श्वासपवने च उड्डीयते । अहो अस्य हृदयस्योपरि कियन्तो विपत्तयः । अग्निना दह्यते । वारिणा प्रवाह्यते । मारुतेन चोड्डायते । इत्यादयः । सर्वाः सत्समयः । 'दहशं तद्विरहानलैः ह्रियं प्रीतिरसेन । स्थिरं पवनि हृदय किं धीरं भ्रमतयेन ॥' इति परमानन्दः 'उड्यो उसास समीर' इति तु भयममेवोड्डापयामास । टीकायाम्–"इदानीं पावकपवनरूपं वारि किमिति वहसि' इति प्रश्नमुत्थाप्य पुनः 'दीप्तं वारि, विरहानलेन दहनम्, प्रीतिरसेन जलेन ह्रियम् आर्द्रतर-मित्यादि विविधं वदति । अकर्मण्यतार्द्रं भवति किम् । पदस्य आर्द्रतरता अत्र निर्धीयते ॥ ४२ ॥

---

१ यवा यवाः ॥ पाठान्तरम् ।

'बिरह सुखाई देह, नेह कियो अतिडहडहो ।
जैसे बरसे मेह, जरै जवासो जौ जमै ॥ ४१ ॥'
'बिरहा आगि पवकि, बहो बिलोचन नीर ।
धायेँ मान हियो रहै, उड्यो उसास समीर ॥ ४२ ॥'

चेदवलोकितुमभिलषसि देहदशामस्या हि ।
तर्हि निभृतनीरवमिमामवलोक्य ननु याहि ॥ ४३ ॥

इति नायकं सखि—अस्या विरहिण्याः देहदशां स्वयं स्वनेत्राभ्यामवलोकितुं वाञ्छसि । अस्मद्वचने तवाविश्वासो भाति । तर्हि निभृतं गुप्तम्, नीरवं निःशब्दं यथा स्यात्तथा, (येन सा न विजानीयात्) याहि, तां च अवलोकय । तवागमनस्य हर्षेण तस्या दशा परिवर्तेत, परं गुप्तं यदि तां द्रक्ष्यसि, तदा मया यादृशी तस्या दशा वर्णिता सा ते प्रत्यक्षं भविष्यतीत्याशयः ॥ ४३ ॥

कति वारांश्च जगाद सा खद्योतानभिदृश्य ।
अङ्गारा वर्षन्ति सखि! तिष्ठ गृहानधिविश्य ॥ ४४ ॥

विरहतापेन व्याकुला सा खद्योतान् अभिदृश्य दृष्ट्वा—"हे सखि! अद्य अङ्गारा वर्षन्ति; एहि, गृहान् प्रविश्य, तिष्ठ" इति कतिवारान् न जगाद । अपि तु बहून् वारान् कथयामास । विरहवह्निज्वलिताया यस्याः कुर्वन्तु खद्योतेष्वपि अङ्गारबुद्धिरेवाभूदित्याशयः । नायकं प्रति नायिकाया दशां सखी वक्ति । कतिवारं न जगाद सा दृष्ट्वा खद्योतानि । वर्षन्ति अनलगोलिकमिति प्रविश प्रविश सद्मानि ॥' इति परमानन्दस्तु खद्योतानलकणोद्गमयोरपि भ्रान्तिमानादिदेश । सखीं प्रति नायिकाया उक्तिरिति विद्यमपि बोधयामास ॥ ४४ ॥

→※ प्रेमगर्विता ※←

क्षणमनक्ति स्पृशति क्षणं क्षणमावृणुते रौति ।
मुकुरे प्रियखण्डितमधरमीक्षन्त्या दिनमेति ॥ ४५ ॥

---

'यां वाके तन की दशा देख्यो चाहत आप ।
तौ बलि नेक बिलोकिये चलि अचका चुपचाप ॥ ४३ ॥'
'विरह जरी लखि जीगननु कह्यो न उहि कै बार ।
अरी आउ भजि भीतरै, बरसत आजु अँगार ॥ ४४ ॥'
'छिनक उघारत छिन छुवति राखत छिनक छुपाय ।
सबदिन पियखंडित अधर दरपन देखत जाय ॥ ४५ ॥'

क्षणं, प्रियदशखण्डितम् अधरम् अनक्ति उद्घाट्य प्रकाशयति । क्षणं तं छुपति स्पृशति । क्षणं सा तमधरम् आवृणुते आच्छादयति । इति मुकुरे प्रियदष्टमधरं वीक्षमाणायाः सर्वं दिनं व्यत्येति । सखीं प्रति सखी नायिकाया लीलां वक्ति । अनुदात्तेत्त्वलक्षणमात्मनेपदं क्षणमनित्यं स्वीकुर्वन्तु वैयाकरणाः, येन ईक्षन्त्या इति स्यात् । यदि सर्वथैव षष्ठीभावस्तर्हि 'अवयस्याः (आभन्त्याः, पश्यन्त्या इति भावः) दिनमेति ।' इति योजयितव्यम् । परमानन्दस्तु—'क्षणं क्षणं प्रियखण्डितं स्पृशति पिधत्ते करेण । दर्शयति कदाचित्स्वाधरं स्वं पश्यति मुकुरेण ।' इति क्षणपदं प्रत्येकमसंबध्यापि छन्दसोऽभङ्गरक्ष्याने स्थाने चकार ॥ ४५ ॥

—मित्यायिदग्धा—

न समलपज्जनमध्यगा पुरतः प्रियमधिगम्य ।
उरसि शिरसि सस्मितमसावधरत्करमवनम्य ॥ ४६ ॥

जनस्य बहिरङ्गलोकस्य मध्यगता, असौ नायिका पुरतः संमुखे प्रियं प्राप्य, संलापं न अकरोत् । सस्मितमवनम्य (प्रणम्य) उरसि शिरसि च करं दत्तवती । कृष्णवर्णे केशपाशे हस्तविन्यासाद्रात्रौ आवयोः समागमः, उरसि, कुचयोः संमुखा साम्यापरवर्तोम तच्छयनपूर्वकं सरलता सूचितेत्यादि बहवोऽर्थाः परिक्षेपाः ॥ ४६ ॥

—अतिरसाविदा—

क्षणं चलैस्तिष्ठैरक्षणं बाह्ौ प्रियमासाद्य ।
हर्म्यतटात् पश्यति घटामबला तडिच्छटाऽद्य ॥ ४७ ॥

---

'दरसि न बोली लखि ललन निरखि अमित सँभराय ।
आँचर हीने हँसि धरयो सीस हिये पर हाथ ॥ ४६ ॥'
'छिनक चली छिनकी छिनक भुजलीलम पल दारि ।
खरी अटा देखति घटा बिजुछटा सी नारि ॥ ४७ ॥'

शशिनं पश्यामि । इमाः (चतुर्थीव्रते चन्द्रायार्घ्यं दित्सन्त्यः) अखिलाः, समयं विनैव विधुम् अदृष्ट्वैव अर्घ्यं ददुः । यदि चन्द्रोदयो जातो न वेति ते ज्ञातुमिच्छा, तर्हि अहमेव तत्पश्यामि । तव मुखं दृष्ट्वा सर्वासां चन्द्रभ्रमो भवेदित्याशयः ॥ ४९ ॥

राजति नीलपटान्तरितमेतन्मुखमवधेहि ।
कलितकलानिधिरुल्लसति कालिन्दी सलिले हि ॥५०॥

अवधेहि अवहितो भव । सावधानं पश्येत्यर्थः । सूक्ष्मेण नीलपटेन अन्तरितम्—अर्थात् दृश्यमानमपि नीलवसनेन ( सूक्ष्मेण ) किञ्चित्सव्यवधानम् इदं नायिकायाः मुखम्, राजति । तत्र गम्योत्प्रेक्षामाह—कालिन्दी-( यमुना ) सलिले पूर्णः कलानिधिः शोभते । श्यामे यमुनाजले यथा चन्द्रः शोभते, तथा सूक्ष्मेण नीलपटेनान्तरितमिदं मुखं शोभत इत्याशयः । 'मुखं नीलवसनावृतं लसति प्रिये तवैव । खलु कलिन्दकन्याजले धन्या चन्द्रकलेव ॥' इति परमानन्दः । नीलवसनेनावृतमित्यर्थकं बिहारिवाक्स्थिताञ्चलस्य । मुखेन साकं चन्द्रकलाया उपमा, परमानन्दादेव मुधा । मूलकारस्य, पूर्णचन्द्रेण साकं तुलना स्यान्न कलया । तथैव कलयेत्येवकारस्याप्यनावश्यकता । आरम्भे एव 'खलु' पदमपि शोभां शिथिलीकरोति ॥ ५० ॥

❧

सूक्ष्मपटे चञ्चलनयनयुगं कान्तिमुपयाति ।
मन्ये सुरसरिताजले मीनमिथुनमाभाति ॥ ५१ ॥

कान्तिमुपयाति प्रकाशते । सुरसरितायाः गङ्गायाः । भागुरेराप् । मीनयोर्मिथुनं युग्मम् । उत्प्लवनेनाभाति 'उत्प्लवद्गङ्गासरिज्जले मीनद्वयमिव भाति' इत्यादि परमानन्दः । सुरसरित्पदं शोधितम् । उत्प्लवन्मीनद्वयं

---

'छिप्यो छबीलो मुंह लसै, नीले आँचर चीर ।
मनौ कलानिधि झलमलै कालिन्दीके नीर ॥ ५० ॥
'चम चमात चंचल नयन, बिच घुंघट पट झीन ।
मानौ सुरसरिताविमलजल उछरत जुगमीन ॥ ५१ ॥

'नयनकमलमिति यन्मुधा नयनोत्पलमिदमेव । अनयोरपि योगे विरहदहनं जयति यदेव ॥' इति परमानन्दः । विधेयं किम्-अस्य श्लोकोऽत्र अविमर्शः । टिप्पणेऽपि परमानन्दः, परमानन्द एव । अत्रोत्पलदहनयोरुपरि दीपता-कृपा प्रदर्शिता एककारोऽपि चमत्कारं सूचयति ॥ ५३ ॥

विषमशीलदृग्भ्यामहो कां गतिमयमारोपि ।
क्वचिद्वेणुमाले क्वचित्पटः क्वचिन्मुकुटोऽपि ॥ ५४ ॥

नेत्रयोः कृते सखी, नायिकामुपालभते—विषमशीलाभ्याम् ( मुखद्वारा अपरलोकं विकलीकुर्वन्तीभ्याम् ) ते दृग्भ्यां अयं श्रीकृष्णः कां दशाम् आरोपि ( प्रापितः ) । यत् वेणु-माला-पट-मुकुटादयः क्वचिदपि विप्रस्ताः सन्तीति स न जानाति । अनिविकल्पः स आत्मने ॥ प्रभवतीति भावः । 'कढेते' पदस्य मुद्रशीटे इत्यर्थं स्वीकृत्यायमर्थः । 'लाड'युक्ते (लालिते) इत्यर्थोऽपि कैश्चित्स्वीकृतः । परमानन्दस्तु 'भुवि शेते संसितवसनमुकुटलकुटकलयेव' पद्यस्य स्थाने संसितप्रयोगो निरर्थकः । बिहारी कथयति- 'कहुं मुरली कहुं पीतपट' अर्थात् ते स्वस्थानाच्च्युताः सन्ति अयं तु व्याख्याति 'शिथिलीभूता पतनार्दाना कला, तथा' । माला परमानन्दमहाशयेन मुद्राविता ! अथ च केयं कला ? ॥ ५४ ॥

मुखनिर्गतवचनान्यमून्यनृतायन्त इतीव ।
संलापाय विलोचने रचयति विधिरकृतीव ॥ ५५ ॥

संकेतस्थले आगमनादिविषये, प्रेमिणां वचनानि प्रायो मिथ्या भवन्ति। अत एव वचनानि लोकेषु अविश्वसनीयानि संजातानि। विधात्रा वचनानि मनोभावसूचनाय, विश्वासाय च रचितान्यासन्। एवं स्थितौ अकृतार्थ इव विधिर्लोचने विरचयामास। तया च चतुराणां लोचनान्येव वचनानां कार्यं साधयन्ति। एवं च नायिकादेः परमदाक्षिण्यं व्यज्यते। एष एव भावोऽस्मिन् पद्ये। अमूनि वचनानि अनृतानि भवन्ति एतदर्थमेव अकृतार्थ इव विधिः संलापाय लोचने रचयामास। परमानन्दोक्तिस्त्वग्रतो भूमिकायां द्रष्टव्या ॥ ५५ ॥

मृगनयने ! मृगयाविधिं मदनो मञ्जुमुवाच ।
वनचरनयनमृगाविमौ नागरनरमृगया च ॥ ५६ ॥

वनविहारं कुर्वतीं नायिकां प्रति सख्याः परिहासोक्तिः—हे मृगनयने ! मदनो (मृगयाशिक्षकः) तुभ्यं मृगयाप्रकारं विलक्षणं प्रोवाच (लक्षणया उपदिदेश)—यत् इमौ वनचरौ नयनमृगौ स्तः, अनयोः कर्तव्या च नागरनराणां मृगया। अन्यत्र मृगयायां नगरनिवासिनो जना वनचराणां मृगाणां मृगयां कुर्वन्ति। अत्र तु वनचरौ इमौ (नयन) मृगावेव नागराणां नराणां मृगयां कुरुतः। यं नरं त्वं नेत्राभ्यां पश्यसि स एव कामविद्धो भवतीत्याशयः। मूले तु 'काननचारी नैन मृग' इत्यस्य 'कर्णपर्यन्तविश्रान्ते नयने' इत्यप्यर्थः संकेतेन भवति, न सोऽत्र साध्यः। 'अद्भुत इति मृगलोचने मृगयाविधिरयमेव। यल्लोचनमृगहस्ताच्चतुरनरहिंसनमधुनैव ॥' इति परमानन्दः। वनचर-नगरनिवासिपदयोः पारस्परिकवैपरीत्यसूचको भावोऽत्रास्तं गतः। हिंसनपदमपि मानुषहिंसनमुद्दीपयति। अधुनैव हिंसनम् ? यज्ञादौ हिंसनं भवेद्यदि 'वैदिकी हिंसा हिंसा न भवति' इतिवत् सह्यमपि भवेत् ! अधुनैव !! कलियुगप्रवर्तने पातस्तु नास्ति !!! ॥ ५६ ॥

---

'खेलन सिखये अलि भलै चतुर अहेरी मार ।
काननचारी नैन मृग नागर नरन सिकार ॥ ५६ ॥'

—※ भ्रूः ※—

कुञ्चितनासिकमुद्भ्रमितनयनं शपथमियाय।
कण्टक इव हृदि पीडयति कुटिला भ्रूः सुचिराय ॥५७॥

कुञ्चिता नासिका यस्मिन् कर्मणि तथा, उद्भ्रमिते (नर्तिते) नयने यस्मिंस्तथा सा। अनभिमते विषये शपथं इयाय (चकार)। शपथसमये कुटिलीकृता भ्रुकुटिः, कण्टक इव हृदि विद्धा चिराय मां पीडयति। न तां भ्रुकुटिं विस्मर्तुं प्रभवामीत्याशयः। 'किञ्चित्कुञ्चितनासिकं नर्तितदृशं तयापि। कण्टकमिव तद्भ्रुकुटं विध्यति मामद्यापि॥' परमानन्दः। प्रकृतविषयस्य मूलोच्छेद एव। क्रिया लुप्ता, क्रियाविशेषणे द्वेऽत्र। 'तथापि' कण्टकस्य द्वितीयस्य विशेषतो विध्यति ॥ ५७ ॥

※ केशाः ※

सहजमसृणशुचिमेचकं कचकुलमेत्य सुगन्धि।
गणयति मार्गममार्गमपि मनो न रत्यनुबन्धि ॥ ५८ ॥

स्वभावतश्चिक्कणम्, स्वच्छम्, श्यामकान्ति, सुरभितम् कचकुलम्, आदृश्य, रत्यनुबन्धि प्रीतिपरवशं मनः, मार्गममार्गमपि न गणयति, चलत्यद्धो अपगीत्याशयः। 'सुरभिसचिक्कणश्यामशुचिसरलरुचिरकेशेषु। कापथेषु गत्वा मनो मुह्यति मुहुरपि तेषु॥' परमानन्दः। 'कापथमुत्पथेषु केशेष्वि'ति व्याख्या। 'गनत न मन पथ अपथ, लखि बिथुरे सुथरे बार' इति बिहारी केशानदृष्ट्वा मनः कापथं न गणयतीत्याह। परमानन्दः केशानेव कापथांश्चकार। 'किं च विपथं कपथं विरथम्' इत्येव कोषे श्रुतम्।

---

'नासा, मोरि, नचाय दृग करी कका की सौंह।
काँटेसी कसकत हिये, गड़ी कटीली भौंह ॥ ५७ ॥'

'सहजसचिक्कनस्यामरुचि सुचि सुगन्धसुकुमार।
गनत न मन पथ अपथ लखि बिथुरे सुथरे बार ॥ ५८ ॥

उभयोः कुचपर्वतयोरारोहणात् खिन्ना (कामाद्रिकटिता श्रान्ता च) (मे) दृष्टि, कुचलोभालोभात् कुचम् अनु इयाय जगाम। परमत्र न चलिता, आरम एव चिबुकस्य रन्ध्र एव चिराय पतिता। श्रान्तोऽपि न चलति, एव मे दृष्टिश्चिबुकसौन्दर्यमुग्धा तत्रैव पीडिताभूदित्याशय ॥ ६० ॥

## कुचौ

कुचयुगमधिकञ्चुकि सिते वसने संव्रियते न ।
सुकविगिरामर्थोपमं प्रकटमीयतेऽनेन ॥ ६१ ॥

अधिकञ्चुकि कञ्चुक्या मध्ये, सिते वसने श्वेतायां शाट्याम्, तस्याः कुच युग न तिरोधीयते । सुकविवाणीनां यथा अर्थच्छाया, अनेन (कञ्चुकेन) (तद्) प्रकटम्, ईयते प्रतीयते । उपरि श्वेता सूक्ष्मशाटी परिहिता, अन्त कञ्चुलिका धारिता तथापि कुचौ दृश्येते एव । यथा सुकवीनां वाणी, आवृतो गुप्तार्था अपि किञ्चिदवधाने एव स्पष्टार्था भवन्ति तथेत्याशय । अनेन प्रकारद्वयोरपि किञ्चिद् गुप्तयोरेव कुचयो शोभेति ध्वनितम्। यथा कश्चित्–"कवि अच्छर तियके सु कुच अध उघरे सुखदेत ॥' (अर्थो गिरामपिहित पिहितश्च कश्चित्सौभाग्यमेति मरहट्टवधूकुचाभ) 'अत्रापि–'साकूतनिहूतवर्गार्धमिव घपटमुकुलसाधेव ।' इति अर्थस्य हीयतां चकार परमानन्द ॥ ६१ ॥

## पटिः

लसति वपुषि नवयौवनं ह्रसति चलत्वमनेन ।
वशयति नयनमिदं यदा नमति मन्दगमनेन ॥ ६२ ॥

---

'दुरत न कुच, बिच कंचुकी चुपरी, सारी सेत ।
कवि आँखरके अर्थ लौं प्रगट दिखाई देत ॥ ६१ ॥'
'छलकाति तन तरुनई रुचि लग लौं रुपि जाय ।
लगी होड गोयननगी छोयन छेड समाय ॥ ६२ ॥'

अनेन (नवयौवनेन) अवलग्नम् कटिः (भागुरेरकारलोपः), हसति। इदम् अवलग्नम् मन्देनापि पवनेन यदा नमति, कृशतावशात्कम्पते हृदयैः। तदा येऽप्यपटेऽपि शोभां प्राप्य, पश्यतो जनस्य नेत्रं पलायते। (हरिप्रकाशटीकामतेन)। रत्नाकरास्तु अन्यविषमर्थं शिष्टप्रायमभिनिवेशयन्ति। मूले 'ल'स्य वृत्त्यनुप्रासः। इह चतुर्ष्वपि चरणेषु 'लसति लसति' इत्यादि अनुप्रास इति शब्दालङ्कारस्य न न्यूनतेति बोध्यम्॥ ६२॥

→※ रूपवर्णनम् ※←

यत्नशते विहितेऽप्यहो, साहसशते कृतेऽपि।
वपुषि रूपरत्नाकरे दृग् नहि पारमुपैति॥ ६३॥

नायिकारूपलुब्धस्य नायकस्योक्तिः, (नायिकोक्तिरपि संभवति)। तस्या रूपमालोक्य, कदाचिन्मनः लावण्यावर्त एव भ्रान्त्वा स्थिरतां भजति, कदाचिच्च लज्जादिसारिकविषयं साधे प्रसरति। एवं दर्शनप्रतिबन्धे सत्यपि यत्नशते कृते, साहसशते अस्माभिर्निर्मितेऽपि। रूपसागरे तस्याः शरीरे मे दृक् (दृष्टिः) पारं न उपैति रूपं विलोकयन्ती दृष्टिं तृप्यतीति भावः)। यावदपरमनन्तार्थकम्। (हरिप्रकाशः)। रत्नाकरस्तु—पूर्वानुरागिण्या नायिकाया उक्तिः सखीं प्रति—लोकापवादाद्भयाद्भीतायाः यत्ने कृतेऽपि, गुरुजनविलोकनाद् दर्शनभये सत्यपि, साहसे कृते लावण्यमये (समुद्रः, शरीरमपि लावण्यमयम्) तनु—सागरे दृष्टिः पारं न पर्याप्तमित्याह॥ ६३॥

दृगुपैति कनकं न वपुराप्य कनकसमकान्ति।
भूषणानि करकर्कशस्पर्शतया प्रतिभान्ति॥ ६४॥

---

'कीने हूँ साहस सहस, कीने जतन हजार।
लोयन लोयन-सिन्धु तन पैरि न पावत पार॥ ६३॥'
'दीठि न परत समानदुति कनक, कनक से गात।
भूषन कर करकस लगत परसि पिछाने जात॥ ६४॥'

कनकसमा सुवर्णसदृशी कान्तिर्यस्य ईदृशं तस्याः वपुः, आ-आप्य । कनकं सुवर्णं दृशं नोपैति । न दृश्यते इत्यर्थः । करयोः कर्कशः स्पर्शो येषां तत्तया भूषणानि प्रतिभान्ति प्रतीयन्ते । कनकसदृशे तस्याः शरीरे सुवर्णभूषणानि वर्णतो न प्रतीयन्ते । किन्तु स्पर्शे कृते, यदा करयोः कर्कशता प्रतीयते तदा भूषणानि प्रत्यभिज्ञायन्त इत्याशयः । "किमङ्गानि किं कनकमयभूषणानि विलसन्ति । इति तदङ्गसङ्गं विना सहचरिजना न यन्ति ।" इति परमानन्दः । 'हे सहचरिजनाः तस्याः अङ्गसङ्गं विना केऽपि जनाः एतन्न जानन्ति यद् भूषणानि उत अङ्गानि' इत्यादि, तट्टीका । अत्र बहुवचनमनौचित्यमाकर्षति । किं सर्वेषामेव अङ्गसङ्गस्याधिकारः ? हन्त धिक् ! भूषणानि कर्कशानीति प्रत्यभिज्ञायन्ते इत्यर्थलाभः कथम् ? आलिङ्गने कृते भूषणानि धारितानीत्येव बोधः, तानि कर्कशानीति तु शब्दतो न प्रतीयन्ते ॥ ६४ ॥

किं कुसुमं का कौमुदी, कियती मुकुरविभाऽपि ।
यस्या उज्ज्वलतावशाद् दृग्भ्यामुज्ज्वलताऽऽपि ॥ ६५ ॥

यस्या नायिकाया उज्ज्वलतार्पणात् (गौरतावैभवात्) दर्शकानां नेत्राभ्यामपि उज्ज्वलता (विलक्षणज्योतिःसंपन्नता) आपि प्रापि । आप् धातोः कर्मणि लुङ् । तस्याः समीपे कुसुमादीनि कानि । तस्या उज्ज्वलतां विलोक्य कुसुम-कौमुदी-मुकुरादयो मलिना इव प्रतीयन्त इत्याशयः । अस्यानुवादेऽपि परमानन्दः पपात । 'यद्विलोक्य विमलानि सन्तु' । यत् किम् ? यत्पदेन 'याम्' इत्यर्थस्तु न संभवेत् । उज्ज्वलतार्थे विमलमपि नार्थसमर्पकम् । विमलपदं मलराहित्यमेवाह, न गौरतामपि । 'जाकी उजराई लखें आँखि ऊजरी होति ।' इति 'उजराई ऊजरी'ति विहारिनिहितः शब्दालङ्कारोऽपि नात्र निरस्यते ॥ ६५ ॥

---

'कहा कुसुम कह कौमुदी, कितिक आरसी जोति ।
जाकी उजराई लखें आँखि ऊजरी होति ॥ ६५ ॥'

## महानसे विलसन्त्या रूपशोभा

रुचिरा मुखरुचिरालसति विशदा शाटी भाति।
महाकान्तिराभावहा महानसे प्रतिभाति॥ ६६॥

विशदा, क्षालनधौततया स्वच्छा शाटी शोभते, तदन्तः रुचिरा, अतिदीप्तिशालिनी मुखरुचिः मुखशोभा, आलसति। अत एव—आभावहा पर्यन्ततः प्रकाशं प्रसारयन्ती, काचिदनिर्वचनीया अतिशोभा, महानसे पाकशालायां प्रतिभाति। नायिकाया मुखदीप्त्या सर्वमपि महानसं द्योतत इत्याशयः। 'रटपी' 'पटपी' ति मूले शब्दालङ्कारस्तथेह 'रुचिरा रुचिरा' इति। 'नगर जगर मगर' स्थानेपि—'महा-वहा-महा-' इत्यनुप्रास इति प्रेक्षणीयं सहृदयैः। परमानन्दस्तु 'रूपविदग्धीकरणस्य' स्वप्नमत्र ददर्शेति पूर्वमुक्तम्॥ ६६॥

## नवोढाया मधुपानम्

समधिकलज्जा नववधूर्मधु निपेय मदमेति।
तथा तथा प्रियतामयति यथा यथोन्मदमेति॥ ६७॥

अनिच्छावती अपि नववधूर्मधु पीत्वा मत्ततां याति। यथा यथा च उन्मदं गच्छति। अर्थात् उन्मत्ततया यथा यथा अविनयमाचरति, तथा तथा प्रियतमस्य अधिकाधिकं प्रियतां याति। परमानन्दस्तु—'मधुरसपीतमर्मगतः सा मधु पपौ यथैव। लज्जापि लज्जां विना विहसति तथा तथैव॥' इति सर्वतः प्रथमं 'लज्जां विना' इति श्रवणेऽनुचितमेव भाति। तथा तथैवेत्यनेन सह यथैवेत्यस्य न योगः। तथा तथेत्यत्र तु भ्रमः प्रतीयते, यथेत्यत्र न। विहारी तु "त्यौं त्यौं अति मीठी लगति ज्यौं ज्यौं ढीठ्यौ देइ।" इति वदन् मधुनिषेवणकृतया—धृष्टतया प्रियोऽस्याः प्रीयत इति म-

---

'रटपी धोई धोवती, चटकीली मुखजोति।
लसति रसोई के नगर जगर मगर दुति होति॥ ६६॥'

'निरद लजीली नवल तिय बहकि वारुनी सेइ।
त्यौं त्यौं अति मीठी लगति ज्यौं ज्यौं ढीठ्यौ देइ॥ ६७॥'

धुरमाह । परमानन्दस्तु–लज्जां परित्यज्य हसतीत्येवाह । लज्जारीत्यागोत्तरं हसनेन माधुर्यमुतानौचित्यम् ? मधुपसपीजनेत्यप्यमधुरम् । अस्तु सहृदयाः स्वतः परिचेष्यन्ति माधुर्यं कटुत्वं वा । मद, उन्मद इत्यन्त्यानुप्रासः (तुकान्त)। 'मेति मेति' इति यमकं 'तुकान्त'मेव ॥ ६७ ॥

## →* अवलोकनम् *←

कलयति वेणीं सुनयना कलितमञ्जना, पश्य ।
अङ्गुलिकुन्तलमध्यतः पश्यति हरिमुद्दिश्य ॥ ६८ ॥

कृताञ्जना एषा सुनयना, परस्परं संलग्नान् केशान्विमोच्य वेणीं रचयति । अङ्गुलीनां कुन्तलानां च मध्यतः हरिमुद्दिश्य पश्यति इति त्वं पश्य। सखीं प्रति सख्या उक्तिः ॥ ६८ ॥

निशितविशालविलोचनाः कति न हि ललनाः सन्ति ।
अन्यास्तास्तव दृष्टयो याः सुधियो वशयन्ति ॥ ६९ ॥

निशिते तीक्ष्णे विशाले च लोचने यासां ताः, कति स्त्रियो न सन्ति । यथा तव तीक्ष्णे विशाले च लोचने एवं बहूनां रमणीनां नेत्रे स्तः । किन्तु तव ता दृष्टयः किञ्चिदनिर्वचनीया एव याभिर्दृष्टिभिः प्रवीणा अपि वशे भवन्तीत्याशयः । त्वयाऽनुपमेन विलोकनेन स प्रवीणोऽपि नायको वशीकृत इति सखी नायिकां स्तौति ॥ ६९ ॥

गुरुजनपरिजनपरिवृता स्थिता मुखं परिवर्त्य ।
तदपि ससिता पतति दृक् सहजसलज्जाऽऽदृत्य ॥७०॥

---

'खंजननि मंजन किये बैठी व्यौरति बार ।
कच अंगुरिन बिच दीठिदै निरखत नन्दकुमार ॥ ६८ ॥'
'अनियारे दीरघ दृगनि किती न तरुनि समान ।
वह चितवन औरै कछु, जिहिं बस होत सुजान ॥ ६९ ॥'
'गयी गुरुजन की भीरमें रही बैठि दै पीठि ।
तऊ पलक पर जात इत सलज हँसौंहीं डीठि ॥ ७० ॥'

हरति। ग्रन्थिर्दुर्जनमानसे प्रीतिरद्भुता भाति॥' इत्याह। दृशोः दृग्युगं मिलति? कोऽर्थः? 'नेत्राभ्यां नेत्रे मिलतः' इत्यर्थश्चेदभिप्रेतस्तर्हि 'दृग्भ्याम्' इति तृतीयां विना सोऽयं दुःसाधः। हे सहचरि! कुलं नो जहाति? पृथगेव। अन्यत्र नेत्रपरिचालने कृते कुटुम्बजना बहिष्कुर्वन्त्येव। काऽसङ्गतिः? ग्रन्थिर्दुर्जनहृदये पतिता! कीदृशो ग्रन्थिः? कुटुम्बत्यागोत्तरं यावत्कालं पुनर्योगो न भवेत्तावत्कालं ग्रन्थिः कथमुद्भवेत्? भवतु–बिहारिणा कृत्रिमरूपेण असङ्गतिः (अलङ्कारः) परीष्टताऽभूत्। परमानन्दमहाभागेन तु स्पष्टेममसङ्गतिः पुरतः स्थापिता॥ ७१॥

लोचनयोरनयोरभूत्किमिति मतौ नायाति।
नीरभरितयोरपि चिरात्तृष्णा किमपि न याति॥ ७२॥

अनयोर्नेत्रयोः का विपदुपस्थिता इति बुद्धौ नायाति। सर्वदा (नायकविरहे) अश्रुजलपूर्णयोरप्यनयोः किञ्चिदपि तृषा न निवर्तते। यस्य सन्निधे जलं भवति न स तृषितो भवति। परं सर्वदा जलपूर्णयोरप्यनयोःतृष्णा न यातीत्याशयः। परमानन्दस्तु–'निस्नेहं नयनद्वयं नेदं सखि तृषदेव।' इत्याह। स्नेहेन (स्निग्धतया,) शून्ये तृष्णा भवत्येवेति बिहारिपाण्डित्यमर्थं मुम्मूर्छयामासैव। अत्र 'बिहारि रत्नाकर'कारो जगन्नाथदासोऽपि नेह न, 'नैननिको कछु' इति पाठं स्वीकृत्य विचित्रमाह–"यह प्रेमरूपी तेल नहीं है, मेरे लिये प्रकाश है इत्यादि."। अत्र स्नेहपदस्य तैलार्थकत्वे को लाभः? किमु तैलेन तृषा निवर्तते। प्रत्युत तैलवस्तूनामुपयोगे तृषा विशेषतो बाधते। न चायं तैलरूपोऽर्थो 'हरिप्रकाशा'दि प्राचीनटीकासु दृष्टः। आयुर्वेदीयपञ्चकर्मसु' स्नेहनरूपे कर्मणि, तैलं पानाय दीयते, तेन स्नेहेन व्यतिक्रमाद् व्याधिरभूदिति तु 'नेह न नैननिको कछु' पदेन स्पष्टं न प्रतीयते इदं हि आकर्षणमात्रम्। पुनर्यथा रोचते॥ ७२॥

---

१ टि पा 'तृषा कथमपि यदोनै याति'
'अति इन लोयनको कछू उपजी बडी बलाय।
नीर भरे नित प्रति रहैं तऊ न प्यास बुझाय॥ ७२॥

—※ विरहोत्कण्ठिता ※—

खमरुणमालीना निशा चटकालीध्वनिरेति।
रतिपाली परया समं वनमाली न समेति॥ ७३॥

खं गगनम्, उषःप्रादुर्भावादरुणं जातम्। निशा च (ईषत्) लीना, नाममात्रतो निशा अवशिष्यते इत्यर्थः। चटकपङ्क्तीनां ध्वनिः कर्णयोराग-च्छति। प्रियतमं प्रतीक्षमाणायाः मे प्रातःकालो जात इत्याशयः। परन्तु-परया अन्यया कयाचिन्नायिकया सह, रतिपाली (रतिं प्रीतिं पालयति रक्षति, णिनि) प्रेमकारकः स वनमाली माधवोऽपि समेति समागच्छति। मूले 'नभलाली चाली निसा' इत्यादिर्योऽनुप्रासः, सोऽत्रापि निर्वाहित इति प्रेक्ष्यम्। 'चलीनिसा' इत्यस्य सर्वैरपि टीकाकृद्भिः 'निशा चलिता' इत्येवार्थः कृतः। रत्नाकरस्तु—'गगनादनिष्टा निशा सच्छिद्रा कृता ('नभकी लालीने रात्रि चाल डाली') इत्यर्थमाह। परमानन्दस्य—"गगनमंजुमालीकैरतरुणतरं प्रतिभाति। आसन्नचटकालीध्वनिर्वनमाली नायाति॥" इत्यनुवादे 'चाली निसा' पदस्य नाम। परं 'रतिपाली आली अनत' इति पदस्य भेदप्रदर्शनतो गुणोऽत्र एव लीनः। केवलं नायकस्य अनागमनेन, तावान् न भेदो यावान् सपत्न्या सह समागमानुमानेन। अत एव हि सा शोचति। 'अंशुमालीकैः' इति तु पूर्वं परिहरमेव मीमहि॥ ७३॥

—※ प्रवत्स्यत्पतिका ※—

विरहतनुम्नतनुरिदमवधि न सहजरङ्गमिताय।
किमधुनैव संस्तूयते कमन! गमनमहाय॥ ७४॥

---

'नभ लाली चाली निसा चटकाली धुनि कीन।
रति पाली आली अनत आये बनमाली न॥ ७३॥'

'अजौं न आये सहज रँग बिरह दूबरे गात।
अबहीं कहा चलाइयत ललन चलन की बात॥ ७४॥'

अस्या नायिकायाः; विरहेण तनुः कृशा, तनुः (शरीरम्), इदमवधि (अद्यमवधिर्यस्य) एतत्पर्यन्तमपि, स्वाभाविकं रङ्गम् (शरीरस्य यः पूर्वं स्वाभाविको वर्ण आसीत्) न इयाय न प्राप। हे कमन! हे प्रणयिन्! अधुनैव अह्नाय (झटिति) गमनं किं प्रस्तूयते, त्वमात्मानमस्याः कामयितारं मन्यसे, एवमवस्थायाम्, पूर्वप्रवासक्लेशादेव नाद्याप्यस्याः शरीरं सुस्थमभवत्। अथापि पुनः प्रवासस्य प्रस्तावं करोषीति नायिकायाः सखी प्रवत्स्यन्तं नायकमाह। मूले 'ललन चलनकी बात' अत्र योऽनुप्रासः सोऽप्यत्र निर्व्यूढः। 'कम्रः कामयिताऽभीकः कमनः कामनोऽभिकः' इत्यमरः। रमाकरस्तु सर्वतो नवीनम् 'विरह दूबरे गात' पदेन नायिकानायकयोरुभयो-'र्गात्र'रूपमर्थमाह ॥ ७४ ॥

## —अनुरागः—

रमण रम्यरूपस्य ते केयं रीतिरुदेति ।
क्षणमपि लग्ना यत्र दृक् क्षणमपि न क्षणमेति ॥ ७५ ॥

हे सुन्दर! तव रमणीयस्य रूपस्य केयं रीतिरस्ति। यत्र रूपे क्षणकालमपि लग्ना पतिता दृष्टिः, क्षणकालार्धमपि क्षणं सुखं (निद्रादिजनितम्) न प्राप्नोति। त्वयि विलोकिते सति, तव सम्यग्भिनानुरागेण विवशीकृतहृदया सा न क्षणमपि निद्रां भजते इति नायिकासखी नायकं वक्ति ॥७५॥

गोकुलकुलनार्यो न कति, कति न शिक्षिताः सन्ति ।
मुरलीस्वरलीना न कति, कुलरीतिं व्यपयन्ति ॥ ७६ ॥

गोकुले कति वा कुलनार्यो न सन्ति। अपि तु सर्वा एव। कति च ताः कुलनार्यः काभिर्न शिक्षिताः सन्ति। अपि तु सर्वा एव सर्वाभिः कुलमर्या-

---

'लाल तुम्हारे रूपकी कहौ रीति यह कौन ।
जासौं लागत पलक दृग लागत पलक पलौन ॥ ७५ ॥'
'कितो न गोकुल कुलवधू काहि न केहि सिख दीन ।
कौने तजी न कुलगली ह्वै मुरली-सुर-लीन ॥ ७६ ॥'

स्वपालनार्थं शिक्षिता । एवंसत्यामपि तस्य श्रीकृष्णस्य मुरलीस्वरे लीना वशीकृतचित्ता, कति या ता कुलनार्यः कुलरीतिं न व्यपगच्छन्ति, अपि तु सर्वा एव कुलमर्यादां विहाय कृष्णाऽनुगा भवन्तीत्याशयः । परमानन्दस्तु —"का न गोकुले कुलवधू का धर्मं न जहाति । का निपीय हरिमुरलिकाऽमृतं न स मतियाति ॥" 'किनी न गोकुलकुलवधू,' इति बहुवचने माध्यास्य तदुपहार । अतिशिक्षिता अपि सर्वथा मर्यादानुगा अपि, मुरलीस्वरश्रीनतया कुलस्त्रीः परित्यजन्तीति शिक्षाविपर्ययमेव प्रकार, मन्युग स्थाने 'का धर्मं न जहाति ।' इति वचने कटुकमिव स्वादयामास । 'कौने सखी न कुलगर्भी' इति स्थाने धर्मपरित्यागरूपोऽर्थो स्पष्टोऽनुचितश्च । भागवतादिभक्तिसंहिताप्रमाणे साध्वतो मान, परं परमौचित्यविचारे साहित्यमार्गे तत्र तपटो । अस्य चित्रकवितमय, अन्यथा मधाना हृदयोद्गार इवेदम् ।

प्रेरि तेन सस्मितमितः, सस्मितमदादियं च ।
द्वयोरभूद् गोमेलने मिलितं हृन्नयनं च ॥ ७७ ॥

धारयितु गोधन मथन्त नायक प्रति, नायिका स्वां धेनु चारणाय सर्वासु नायकधेनुषु मेलयितु प्रतयामो । नायक परिहासमकरोदियमपि तदुत्तरहास्येव द्वयोरनुरागोऽभवदिति कृत सखी सखीं वदि—तेन नायकेन इतः (नायिका प्रति) सस्मित गौः प्रेरि प्रेरिता । [नायिकया स्वकीया गौः सर्वासु गोषु योजिता, परं नायकेन परिहासार्थं सा गौः नायिकाभिमुखे परावर्त्य प्रेरितेत्याशय ] इय नायिकापि हासस्य उत्तरे हास्यमेव कुर्वती (सस्मितम्), तां गाम् अदात् । अर्थात् नायक प्रति प्रेरितवती । एव गोमेलने द्वयोर्नायिकानायकयोः पूर्वं नयन पश्चाच्च हृदय मिलितमभवत् । द्वयोरनुरागो मवद्दित्याशयः ॥ ७७ ॥

---

'उन हरकी हँसि कै इतै इन सौंपी मुसकाइ ।
नैन मिलैं मन मिलि गये दोऊ मिलवत गाइ ॥ ७७ ॥'
स० सि० १०

दत्तं मे, मामकमभूच्चिवसति सह जीवेन ।
दयित ! सपत्नीकर इदं मनो देहि न बलेन ॥ ७८ ॥

हे दयित ! त्वया स्वस्य मनो मह्यं दत्तम् । त्वया यदा मनो मह्यं दत्तं तर्हि तत्, मदीयमेवाऽभवत् । इदानीं तस्योपरि ममैवाधिकारः । तत् मनः, साम्प्रतं मम जीवेन सह निवसति । अहं तत्ते मनः स्वजीवितसमं प्रतिपालयामीत्यर्थः । इदानीं तदिदं मनः, बलात् (अर्थात् मज्जीवितेन सह पदमपि, बलपूर्वकं आकृष्य) सपत्न्या हस्ते न देहि । यदि तत् बलादाकर्षसि, तदा मम जीवितमपि गमिष्यसीति ध्वन्यते । अत्र 'उपपत्नीभ्यो दासि तावदनुचितमधुनैव ।' इति परमानन्दः । छन्दोभङ्गस्तु प्रत्यक्ष एव—'दासि' इति कियन्मधुरो धातुः ! अधुनैव इति एवकारस्य किं स्वारस्यम् ? अग्रे यदि मनोऽन्याभ्यो दीयेत तर्हि किं नायिका प्रसीदेत् ? विहारी तु अग्रे दानस्य प्रतिदानं न करोति । आह स —"सो मन बाँधि न सौंपिये पिय सौतिन के हाथ ।" उपपत्नीभ्य इत्यपि सपत्न्या उपपर्याय एव ॥ ७८ ॥

### दम्पत्योरभिसारः

मिलितमभूदङ्गं द्वयोश्छायाचन्द्ररुचीषु ।
निर्बाधे सह गच्छतो हरिराधे वीथीषु ॥ ७९ ॥

हरेः राधायाश्चेति द्वयोरङ्गम्, छायायां चन्द्रकान्तिषु च मिलितमभूत् । कृष्णत्वात् हरेरङ्गं छायायां मिलितम्, गौरत्वाद् राधाया अङ्गं चन्द्ररुचिषु मिलितम् । यथासंख्यम् । अत एव येनाप्यलक्षिते, इति निर्बाधे निःशङ्के हरिराधे, वीथीषु ('गली') सह गच्छतः । हरिः राधा च वीथीषु एता-

---

'मोहि दियो, मेरो भयो, रहत जु मिल जिय साथ ।
सो मन बाँधि न सौंपिये पिय सौतिनके हाथ ॥ ७८ ॥'
'मिलि परछाँही जोन्हसों रहे दुहुनके गात ।
हरि राधा इक संग ही चले गली महिँ जात ॥ ७९ ॥'

शयः । परमानन्दस्तु–'सुरतविपर्ययवाञ्छया पत्यौ प्रणमति सैव । ददावुत्तरं मानिनी सस्मितमौनेनैव ॥' इति दीर्घं प्रति इङ्गितस्य कथामेवापलाप । 'सैव उत्तरं ददौ' ? तर्हि अन्यः कश्चन वाह्योल्लेखोऽप्यपेक्ष्यते ? सुरतविपर्ययपदेन विपरीतरतस्य ग्रहणमपि न कुत्रचिद्दृष्टम् ॥ ८१ ॥

### →※ नखक्षतम् ※←

मरकतभाजनसलिलगा मृगाङ्कनवलेखेव ।
सूक्ष्मपटान्तरिता लसति हरितनुनखरेखेह ॥ ८२ ॥

सूक्ष्मपटेन अन्तरिता, सूक्ष्मवस्त्रमध्याद् दृश्यमाना इत्यर्थः । हरेः, श्यामवर्णायाः तनोः (शरीरस्य) नखरेखा । मरकतभाजने भरिते सलिले गता (प्रतिबिम्बिता), चन्द्रस्य नवीना कला इव, इह लसति । श्वेतवर्णसूक्ष्मपटान्तरिते श्यामशरीरे नखरेखा, नीलमणिभाजनमध्ये जलं भृतं भवेत्तत्र द्वितीयातृतीयाचन्द्रस्य कला प्रतिबिम्बिता भवेत्, तादृशी शोभत इत्याशयः । सपत्न्याः सविधे कृतकेलिरागतोऽसीति सूचयितुं नायिकासख्याः नायकं प्रत्युक्तिः । अन्यटीकासु नायिकाया एवोक्तिः । परमानन्दस्तु–"नखरेखा मेघडम्बरी तनुवसनावृत एव ।" इत्यादि । 'सूक्ष्मं पट्टवसनं तेनावृते तव मेघडम्बरी' इति टीका । तनुशब्दस्य स्त्रीत्वमेव प्रसिद्धम्, अन्यलिङ्गं तु परमानन्द एव जानीयात् ॥ ८२ ॥

### →※ परिहासः ※←

हरिरवदद्दिनमणिमिमं प्रणमत करद्वयेन ।
श्रुत्वाऽऽसां सस्मितमभून्नयनं सेर्ष्यमनेन ॥ ८३ ॥

---

'मरकत-भाजन-सलिल-गत इन्दुकला के भेख ।
झीन झगा में झलमलत स्याम गात नखरेख ॥ ८२ ॥'
'रवि बंदौ कर जोरि, ए सुनत स्यामके बैन ।
भये हँसौंहैं सबनके अति अनखौंहैं नैन ॥ ८३ ॥'

श्रीकृष्णभट्टमहाभागस्य पूर्वं निवासो बुन्दिनगरेऽभवदिति तस्य रचनातः प्रतीयते। कुलप्रबन्धे हरिहरभट्टैरपि लिखितम्—

"श्रीकृष्णभट्टस्तनयस्तदानीं श्रीलक्ष्मणाद्राहितलक्षणोऽभूत्।
वशीकृतो येन गुणैरुदारैर्बुन्दीपतिः श्रीबुधसिंहभूपः॥"

बुन्दीश्वरस्यास्य बुधसिंहस्याज्ञया 'शृङ्गाररसमाधुरी' 'विदग्धरसमाधुरी' नामकौ ग्रन्थौ कविकलानिधिमहाभागेन रचितौ। अलङ्कारकलानिधिप्रभृतिष्वन्यान्येष्वपि पुस्तकेषु बुधसिंहभूपस्य प्रशंसायाः काव्यान्युपलभ्यन्ते। श्रीकृष्णभट्टमहाभागानां काव्यानि प्रायो 'लाल'कविनाम्नाऽङ्कितानि। यथा अलङ्कारकलानिधौ—

"राव अनिरुद्धसिंहजूके राव बुद्धसिंह
रावरे सबल दल चलत धमकसों
लालकवि तितके भुवाल पयमाल होत
खूंदे हयमाल सुरतालकी धमकसों।
भारे होत वारिधि अँध्यारे धूरधार उजि-
यारे दामिनीके असि कारेकी दमकसों
गारे पैं मदिन पगारे पैं वारिधिन
भारे पैं अरिन नगारेकी धमकसों॥"

पद्यमुक्तावल्यामपि—

"देव श्रीबुद्धसिंह त्वदसिजलधरोल्लासिसत्कीर्तिनीरे
शुभ्रप्राप्याद्रितीरे भवसरसि भवत्साधुवादोर्मिसंघे।
नक्षत्राण्येव हंसाः परिलसितनभोनीलिमा शैवलौघः
पूर्णेन्दुः पद्ममस्मिन् मधुरमधु सुधा देववृन्दा मिलिन्दाः॥"

अनन्तरं तु कलानिधिमहाशयस्यालौकिकप्रतिभया चमत्कृतोऽम्बरधरणीपुरन्दरो बुन्दिभूपालाद्याचित्वा सुबहुसत्कारसंतोषितमेनमाम्बेरनगरे निवासयामास। श्रीकृष्णभट्टमहाभागानां प्रपौत्रैः देवर्षिवासुदेवभट्टैः स्वनिर्मितायां 'राधारूपचन्द्रिका'यां स्ववंशपरिचये एवं लिखितम्—

"छप्पै—दच्छिनदिसि तैलङ्गदेस इक राजत नीको।
इहँके परम कुलीन विप्र कविराज सहीको॥
कृष्णभट्ट इमि नाम, वेद, शास्त्रनमें पारग।
लौकिक वैदिकरीति, कृष्णको जान्यो मारग॥
तिन किय ग्रन्थ सब शास्त्रके, रामायन लप लेह भो।
तिनसों जयसाह नरिंदके, गुनगरिमा मल नेह भो॥ १॥
दो०—बुन्दीपति बुधसिंहसों लाये मुखसों जाचि।
रहे भाइ आँवेरमें प्रीति रीति बहुभाँति॥ २॥"

स्वयं विद्वान् विद्वद्गुणग्राही च श्रीमान् जयसिंहधरणीन्द्रः श्रीकृष्णभट्टमहाभागानामतुलमादरं चकार। आत्मनो नामाऽमरीकरिष्यन् सोयं श्रीकृष्णभट्टद्वारा अलङ्कारकलानिधिप्रभृतीन् ग्रन्थान् निर्मापयामास। भारतवर्षे दूरदूरपर्यन्तं श्रीकृष्णभट्टसदृशो महाकविर्विद्वांश्च नासीत्। संस्कृते व्रजभाषायां किंबहुना प्राकृतभाषायां चापि श्रीकृष्णभट्टमहाभागानामप्रतिहता कविरयशक्तिरासीत्, यस्याः परिचयः किञ्चिदग्रे दास्यते। अत एव तेषां पाण्डित्येन मुग्धोयं धरणीपुरन्दरस्तस्मै 'कविकलानिधि'पदकं प्रादात्। यथा हि प्रोक्तं देवर्षिवरमण्डनमहाभागैः 'रायलचरित्रकाव्ये'—

दो०—"द्विजकुलकवि श्रीकृष्ण भय पंचद्रविड तैलंग।
रामायन जिनने कियो रामरासपरसंग॥
विद्वत्कुलके मुकुटमणि, 'काव्यकलानिधि' दच्छ।
दिय खिताब जयसाहने सब बुधिमें परतच्छ॥"

एतादृशान् श्रीकृष्णभट्टनामकान् कविषु विबुधान् स्तुवीमहे। स्वपूर्वजानामादरार्थं कर्मणि बहुवचनम्। एवमग्रेपि, चरित्रवर्णनविषये एकवचनमुपात्तं तेषामुपश्लोकने तु बहुत्वमेव प्रायोजि॥ ६॥

सो०—सत्यसिद्धिसुलभा हि, वाग्देवी वशगाभवत्।
येषां वैभववाहि-विविधकथाः प्रथिताः कुले॥ ७॥

येषां श्रीकृष्णभट्टानाम्। वैभववाहिन्यो नानाकथाः कुले प्रसिद्धाः॥७॥

तदनु स ईशविलास,-मीश्वरिसिंहनृपाज्ञया ।
काव्यं कलयांमास, पूर्वभूभृदितिहासगम् ॥ ८ ॥

संस्कृते–ईश्वरविलासनामकं महाकाव्यम्। पूर्वेषां भूभृतां राज्ञामितिहासानुगम्। यथाहि ईश्वरविलासस्य प्रथमसर्गारम्भे—

"प्राप्तास: श्रीसवाईश्वरधरणिपतेः प्रासभूरिप्रमोदः
संप्राप्योत्साहकश्रीहरिहरसुकवेः संमतं संशयघ्नम् ।
काव्यं श्रव्यं सुभव्यं भुवि रचयति यः प्रीतये पण्डितानां
सोयं श्रीकृष्णशर्मा कृतमतिं नमति श्रीगुरोरङ्घ्रिपद्मम् ॥"
( हरिहरसुकवेः 'कुलप्रबन्ध'निर्मातुः श्रीहरिहरभट्टस्य ) ॥ ८ ॥

प्रलसति पुण्या 'पद्य,-मुक्तावलि'रेतत्कृता ।
जनयति मुदमनवद्य,-त्रिपुरसुन्दरीस्तववरः ॥ ९ ॥

पद्यमुक्तावलिः संस्कृतप्राकृतभाषापद्यानां संग्रहकोषः। त्रिपुरसुन्दरीस्तवराजः शिखरिणीच्छन्दोभिराबद्धश्चरहस्यानुगः स्तोत्रग्रन्थः । 'एनयोः कानिचित्पद्यान्यग्रे आदर्शरूपेणोद्धारिष्यन्ते ॥ ९ ॥

दो०–माधवसिंहनृपो ददा,-वष्टादशशतके च ।
कर्मपुरग्रामं महीं, हथरोहीग्रामे च ॥ १० ॥

कर्मपुरग्रामं संपूर्णम्, हथरोहीग्रामे च शतनिवर्तनात्मिकां (१०० बिगहा) भूमिम्। श्रीमदीश्वरीसिंहदेवस्यानन्तरं श्रीमति माधवसिंहनरपाले जयपुरराज्यस्य धुरं धारयति, श्रीकृष्णभट्टमहाभागस्तमप्यात्मनोऽनुपमेन पाण्डित्येन भूयस्तरां संतोषयामास । अम्बरधरणीन्द्रेण श्रीमज्जयसिंहनरेन्द्रेण साकं गाढपरिचयप्रसङ्गो रामायणनिर्माणेन बभूव। ( अनेन अलङ्कारकलानिधेरपेक्षया रामायणं पूर्वनिर्मितमिति सिध्यति । ) श्रीमानीश्वरीसिंहभूपालस्तु स्वराज्ये पूर्वतः प्रसिद्धमेनं कवीन्द्रं गुणगणानुरागवशादेव बहु मानयामास। परं पारस्परिकयुद्धोत्तरं यदा श्रीमन्माधवसिंहः सिंहासनारूढोऽभवत्तदा

गृहस्य कलानिधिमहाभागस्य मनसि महाराजस्य संतोषविषये शिथिल संदेहोऽभवत् । परं कलानिधिमहाभागस्य कवितावल्ली श्रीमन्माधवमहीन्द्रमपि प्रसभमावर्जयामास । अतएव श्रीमज्जयसिंहेश्वरीसिंहमहाराजयोः समय एव प्रचार्यमाणा ग्रामवितरणवार्ता श्रीमन्माधवसिंहमहाराजस्य समये पूर्णाऽभवत् । एतस्मिन्समये ग्रामस्य शासनपत्रं ( पट्टा ) अदीयत कलानिधिमहाभागाय । अयं भावः पद्यमुक्तावल्यैरनेन पद्येन विज्ञायते—

"श्रीमन्महाराजाधिराजे सति पशुपतृत्वं भूरि रामायणेन
प्रारब्धादीश्वरेऽभूत्स विविधगुणग्राहितैयोपकर्षी ।
भाति प्रोद्यैरराति प्रकरहरवरः कोविदानां कवीनां
भाग्यैः श्रीमाधवाख्यो नरपतिरगुणाऽकारि येनोपकारः ॥"

शनैः शनैः कविकलानिधिमहाभागस्य गुणैरतिवशीभूतो बभूव श्रीमाधवधरणीन्द्रः । आत्मनो लेखादिकं परमविश्वासभाजनायास्मै प्रेम्णा दर्शयामास । पद्यमुक्तावल्यां स्वयं लिखितं कलानिधिमहाभागैः—

"एकदा माधवक्ष्माधवेन स्वहस्तेनाक्षराणि लिखित्वा यदा मम प्रदर्शितानि तदैवेदं सद्यः पद्यमुच्चारितम्—

श्रीमाधवाम्भोनिधिसंप्रभूत-
रत्नानि नित्यं लिखिताक्षराणि ।
श्रीसूर्यवंशोदितदीप्तिमन्ति
जगत्समग्रं परिभूषयन्ति ॥*॥" १० ॥

किं बहुना नरपतिमनसि, कविकुलकीर्तिररोपि ।
भूरिभूमिसम्पदमनु,-बुन्दीनरपतयोऽपि ॥ ११ ॥

नरपतेर्माधवेन्द्रस्य । कविसमूहस्य कीर्तिः आरोपि दृढीकृता । अत एवाग्रे बहुभ्यः कविभ्यः श्रीमाधवेन्द्रेण ग्रामादिसंमानः प्रादायि । बुन्दीनरेशेन बुधसिंहेन, अन्यैश्च तदुत्तरे राजभिर्बहुतरा भूमिसंपत्तिर्दत्ता, या तद्वंशजानामधिकारे बहुकालं तस्थौ । पश्चाच्च सुन्दरलालशर्मणः समये सा सम्पद्विकर्षं गतेत्यग्रे ग्रन्थकर्तुः परिचयप्रसङ्गे स्फुटीभविष्यति ॥ ११ ॥

## चरित्रसंग्रहः

श्रीमान् श्रीकृष्णभट्टमहाभागो भारतस्य बहुषु प्रान्तेष्वभ्राम्यत्। आसीच्च तस्मिन्समये स्थाने स्थाने महापण्डित-कवीन्द्रसाम्य सुबहुमानः। मालवदेशोऽस्य भूयान्निवास आसीदिति प्रतीयते। मालवस्त्रीणां वर्णनम्, महाकालस्तवः, नर्मदास्तोत्रम्, अन्यान्येषां च तद्देशस्थामानां वर्णनं पद्यमुक्तावल्यामुपलभ्यते—

"शिप्राम्भःप्रेङ्खितेभ्यः परमकरुणया राजहंसोत्तमेभ्यः
स्वान्तेवासिभ्य एभ्यः स्वरनिगमगणाध्यापनं निर्दिशन्ति।
पादाङ्गुष्ठाङ्गुलीयाभरणचटकिकाचारुचाटूक्तिदानै-
र्मन्दाग्र्येषोद्धृतानि प्रविदधति मुदं मालवीनां गतानि॥"

(पादाङ्गुलिषु व्रजभाषायां 'चुटकी' इति प्रसिद्धमाभरणं धार्यते। तन्नाम स्मारयन्, तत्र चटकात्वं रूपयन् तस्याः शिञ्जारवं चाटूक्तिरूपेणोत्प्रेक्षांचक्रे कलानिधिमहाभागः।)

"तारुण्योन्मेदभाजां कटिचरणरणत्किङ्किणीनूपुराणां
प्रोद्यन्मन्दानिलान्दोलितपरमपटस्पष्टनम्रस्थलानाम्।
गम्भीरावर्तनाभीलसदुदरवलीरोमवल्लीयुतानां-
मेतासां मालवीनां कलयति मदनोन्मादनं मन्दहासः" इत्यादि।

'गीतिः'

'मम मतिरतिविरमति चन्द्रभाले महाकाले। (ध्रुवम्)
लीलालोलव्यालमाले। कलितभूमीधरबाले। जटाजूटजटाले।
केलीविदलितदुःखजाले, निखिलसुरावलिभूपाले, सुरधुनीचूडाले।
गरलनिगलनाकण्ठेकाले। धत्तूराकुसुमरजाले। सुकविकलानिधिकृपाले॥'

"यस्या नीरे गभीरे सकलभयहरे स्वां तनुं सम्भ्रमित्वा
मय्येवान्तरालोकयति परशिवानन्दसाक्षात्स्वरूपम् ।
मार्कण्डेयप्रचण्डप्रभुतातपोराशिपुण्यच्छटाया–
स्तस्याः श्रीनर्मदायास्तव जननि सरित्का समत्वं प्रयाति ॥" इत्यादि।

श्रीमता जयसिंहदेवेन सुबहुमानपुरस्सरमाम्बेरनगरमानीय निवासितो-ऽयमासीत्। परमस्यैव समक्षं जयपुरनगर्याः स्थापनमकारि श्रीजयसिंहधर-णीन्द्रेण। ईश्वरविलासमहाकाव्ये महापुर्याः स्थापनं श्रीमज्जयसिंहकृतमुप-वर्णितम्—

"येन महापुरी कृताऽतिधवलैः कैलासशैलोपमै-
र्विमाणी भवनैः सदा समुदयत्संपद्विलासाश्रितैः ।
प्रत्यागारमुरुप्रकारदहनैर्यत्राग्निहोत्राण्यमु-
र्लीलादत्तधतु.पुमर्थपटलीजातादरानि स्फुरम् ॥
श्रियं धत्ते यस्यामधिगिरिशिरः श्रीगणपते-
र्गृहं दूराद्दृश्यं सुखचितमणीभासिरङ्गम् ।
ध्रुवं तस्या एव क्षितिपतिरमण्याः सुरुचिरे
ललाटे सिन्दूरैः कलितमिव सौभाग्यतिलकम् ॥"

(गणेशगढगतस्य गणपतेर्वर्णनम्। तस्या महापुर्याः।)

पद्यमुक्तावल्यां नवस्थापिताया जयपुरराजधान्या वर्णनं स्पष्टमुपलभ्यते, यां तस्मिन्समये युद्धोपकरणसज्जायास्तन्नगर्याः स्वरूपमुपलभ्यते। यथा—

"नित्यज्यारूढचापा स्थिरतरवराधानुष्कता सङ्कुलाढ्या
निःसानश्रीः समन्ताद्विलसितजनमना व्योम्नि नम्रासिधारा।
प्रोद्यत्पर्जन्यकीर्तिर्मदगजगतियुग् भैरवाद्यानुनादा
जागरूकामाधिराज्या जयति जयपुराख्या नृपा राजधानी ॥"

(यद्यपि भगवत्यामपि सर्वाणि विशेषणानि युज्यन्ते। कामानाख्या भगवत्यस्मिन् समये आधिराज्यमासीत् ॥)

नानानरेशानां परमादरभूमिः श्रीमान् श्रीकृष्णभट्टमहाभागो मनस्वि-

तायाः परा काष्ठा बभूव। स न कदापि दैन्यं पस्पर्श। अहह! कीदृङ् मधुरमुक्तं मुक्तावल्यां तेन—

"ज्वलतु जलधिक्रोडक्रीडत्कृपीटभवप्रभा-
प्रतिभटपटुज्वालामालाकुलो जठरानलः।
तृणमपि वयं सायं संफुल्लमल्लिमतल्लिका-
परिमलमुचा वाचा याचामहे न महेश्वरान्॥"

यो ह्यनेन सह निरर्थकं स्पर्द्धते स्म, समयं समयं प्राप्य मर्मस्पर्शिवचनैः समालोचयति स्म। एतस्य समये भवेत्कश्चिदौदुम्बरभट्टोऽस्य प्रतिस्पर्द्धी, समयं कीदृगवहेलया स्मरति। दृश्यताम्—

"गुणवद्गणितो गुणिनां शृणुयादेवैष सुमधुरा वाचः।
यदस्य कर्णलग्नो न स्यादौदुम्बरो मशकः॥"

नरपतिसभासु बहुतरं समयं यापितवतो धर्मैकनिष्ठस्य कलानिधिमहाशयस्य पर्यन्ते शनैः शनैर्निर्वेद उदेति स्म। विशेषतो मिथोविरुद्धयोर्द्वयोर्भूपयोः परस्परमतिस्पर्द्धिसौभाग्यवर्णनेन समुत्पन्नोऽभून्निर्वेदः श्रीमतः कलानिधिमहाशयस्येति ज्ञायते। अत एव राजसेवोत्तरमन्ते वृन्दावनवासो निर्धारितोऽभूत्। परं जयपुरनरेन्द्रस्य श्रीमाधवेन्द्रस्य परमाग्रहवशादसौ रुद्धः श्रीकृष्णभट्टमहाभागैः। प्रोक्तं मुक्तावल्याम्—

"कालिन्दीतटनिकटस्फुटकुटजकुटीनिवाससौख्याय।
स्मरसि कृपाभाषणमपि, न तदजनि हृदिमहत्कदनम्॥
राज्ञां सदस्सु गमनं कवितकरणं कृपाऽऽकलनम्।
वृन्दावनवासार्थं स्मरसि विधे किं न तदपि संपन्नम्॥
मिथ्याकथनदुरत्ययनृपवरकृतरक्षणव्ययादुष्टः।
हा वृन्दावन भवता संप्रति दूराद्विमुक्तोऽस्मि॥"

सबहुमानं राजभिः परिचरितोऽपि मनसि भगवद्विषयकसेवाध्यानं कुर्वन्नासीत्। अत एव लभ्यन्तेऽन्ते मुक्तावल्याम्—

"किञ्चिद्वयाद्येप्यधीतं किमपि च पठितं पाणिनिव्याकृतौ मे
किञ्चित्साहित्यसिन्धुप्रसमरलहरीसद्मसंसिक्तताद्धि।

सर्वावस्थासहायस्मरणविषयता श्रीयशोदाकुमारे
जाने नैतद्यतुष्कादितरमहमहो नैव जाने न जाने ॥
अमुना यमुनाकूलवटमूलविहारिणा ।
हारिणा हरिणा हन्त हेलितं हृदयं मम ॥
अद्भुतमेतदिदानीमनुरागि मनो यथा यथा मग्नम् ।
क्वचिदपि नीलरसे तत्तथा तथा जातमवदातम् ॥" इत्यादि ।

बुन्दीराजसभायां गमनात्पूर्वमयं भरतपुरराज्येऽपि किञ्चित्कालं तस्थाविति केषांचिन्मतम् । अत एव तत्र एतत्कृतो 'दुर्गाभक्तितरङ्गिणी'नामको ग्रन्थः प्रसिद्धोऽस्ति । यदीदं मतं सम्यक्, तर्हि पद्यमुक्तावल्यां प्रोक्तं पद्यद्वयं जट्टराजस्य श्रीमतः सूर्यमल्लस्यैव कृते कविनोपनिबद्धं भवेत् । यथा—

"इतो हैन्दवीं सृष्टिमानन्दयन् स्वै-
र्गुणौघैस्ततो यावनीं सृष्टिमुच्चैः ।
महेन्द्रास्पदे श्रीयुतः सूर्यमल्ल-
स्तटद्वन्द्वसद्धत्तरङ्गः समुद्रः ॥
उद्यन् दीपाकरस्याप्यथ निजचरणैकाश्रयस्य प्रभावं
तन्वानः किंकराणां विश्रुत गुणवतां रज्यतामम्बुजानाम् ।
भाति वयातप्रभातोदयगिरिगदितोद्दामविद्योधरश्मि-
प्रोद्यन्मण्डलाग्रप्रचुरतररुचिः श्रीयुतः सूर्यमल्लः ॥"

(मण्डलाग्रं विस्वाप्य खड्गश्च ।)

एतास्वपि स्थानेषु स्वैदुर्ष्यं प्रख्यापितवद्भिः कलानिधिमहाभागैर्बहवो ग्रन्था निबद्धा भवेयुः, परं दौर्भाग्यवशादेतद्वंश्यानां सविधे कतिचिदेव प्राप्यन्ते । लब्धान्यपि पुस्तकानि प्रायो जीर्णान्यपूर्णानि च सन्ति । एतस्य कारणमग्रे ग्रन्थकर्तुः परिचयप्रसङ्गे स्फुटीभविष्यति । अद्यावधि लब्धान्येतानि सन्ति । संस्कृते—ईश्वरविलासमहाकाव्यम्, पद्यमुक्तावलिः, सुन्दरीस्तवराजः, वेदान्तपञ्चविंशतिः ।

व्रजभाषायाम्—अलङ्कारकलानिधिः, सांभरयुद्ध, जाजऊयुद्ध, बहादुरविजय (ग्रन्थ), शृङ्गाररसमाधुरी, विदग्धमाधवमाधुरी, तैत्तिरीयाद्युपनि-

पदां प्राचीनहिन्दीभाषायामनुवादः, जयसिंहगुणसरिता, रामचन्द्रोदय, रामरासा, वृत्तचन्द्रिका, नखसिखवर्णनं दुर्गाभक्तितरङ्गिणीप्रभृतयः। कलानिधिमहाभागानां संवत् १७२५ तमे वैक्रमवत्सरे जन्माभूदित्यनुमीयते। प्रयाणं च १८०० तमाद्वत्सरादुत्तरं भवेदिति प्रतीयते॥

यद्यपुक्तावश्याः कानिचित्पद्यानि प्रसङ्गेन पूर्वमुद्धृतान्येव। परमस्यां बहवः खड्ग–गज–नर–पद्म–द्विगुणपद्म–कामधेनु–कपाटबन्धप्रभृतीनि चित्रकाव्यानि सन्ति। किन्तु तत्र तेषां चित्रणानुपलम्भाद्विस्तरभयाच्च नेह निदर्श्यन्ते। अन्यान्यपि चमत्कारीणि बहूनि काव्यानि सन्ति। प्राकृतसंस्कृतयोर्भाषासमकानि प्रायो दृश्यानि। परं हिन्दीसंस्कृतयोर्नाद्यावधि प्रसिद्धानीति बहवो वदन्ति। एकद्वे पद्ये एतासां पद्धीनां लेखकेनापि पूर्वं (जयपुरखण्डे) प्रकाशितान्येव। किन्तु कलानिधिमहाभागस्य दीर्घेषु वृत्तेषु सुरुचिराणि भाषासमकानि (हिन्दीसंस्कृतभाषाश्लिष्टानि) यथान्युपलभ्यन्ते। तेदवेकमत्र पाठकानां मनोविनोदार्थमुपन्यस्यते, अर्थोद्धारस्तु प्राकनपुस्तके नोपलभ्यते। किञ्च मया किञ्चिद पाठकैरेव स्वबुद्ध्या विचारणीयो भवेत्। निदिष्टश्चमत्कारसवश्चित् पद्ये सोऽयं विलोकनीयो यद् यथा संस्कृतहिन्दीभाषयोः श्लेषः पूर्वमर्येपि श्लेषः। हिन्दीभाषायां वर्णनीयः श्रीकृष्णचन्द्रः। संस्कृते तु वर्ण्यो भगवान् शङ्करः। दृश्यतां, ब्रजभाषाऽर्थानुकूल्येन पदच्छेदादिभिर्विलिख्यमानं तदिदं पद्यम्—

"सात दिना कर लीन महागिरि जा पर मोर कुतूहल धारी
कण्टहरा हर कीलकुटी, तनु नीलम सी रुचि रञ्जनकारी।
कामद, बारहितो वर गोपतियान उदार कलानिधि भारी
भावनि जाचित सर्वसु राधिक ए तुम नोलित राम हि हारी॥"

(सप्तदिनावधि, करे येन महागिरिः (गोवर्धनः) गृहीतः, यदुपरि मम कुतूहलं दधाति। कण्ठे हारः (वनमाला), कीलकुट्याः दावानलजालस्य यो हारकः (वह्नेर्दंयोर्ज्वालकीलौ)। यस्य तनुः नीलमणिवत् स्वकान्त्या रञ्जनकारिणी। कामदः, मित्रेषु हितः, श्रेष्ठासु (गोपतियान) गोपस्त्रीषु उदारः, श्रेष्ठश्च कामकलानां निधिः। भावैः यस्य चित्ते सर्वस्वं

राधिकास्ति, अयि त्वं नवनीतस्य ( मह्हि ) दधश्च हारी असि ।" एवंप्रायो व्रजभाषायामर्थः ) ।

संस्कृते तु—( सातदिनानां सुखदिनानां समूहे लीनं महस्तेजो यस्य, सातदिनाकरलीनमहा, यस्य तेजः ( प्रभावः ) सुखदिनकारी, कालं शुभं निर्मातीति यावत्, (शर्मसातसुखानि च) । यः शिवः, गिरिजायाः परमोरु—महत् कुतूहलं धरति । कण्ठे या हलाहलस्य कीलकुटी ज्वालरेखा, तया तनुः सूक्ष्मा या नीलमसी–(स्याही–)–वत् रुचिः, तया रञ्जनकारी । कामोपरि दयारहितः, वरः श्रेष्ठो यो गोपतिर्नन्दीश्वरः स यानं यस्य । उदारं निष्कलङ्कं कलानिधिं चन्द्रं बिभर्ति सः । मायेन निजं स्वयं आचिताः एकत्र्यापिताः ये सर्वे सुराः तेषु अधिकः, ईदृशः अहिहारी ( सर्पभूषणः ) नितरां सदा मनः एतु, अधितिष्ठतु–अयमर्थः स्यात् । )

अन्योपि शब्दकृतश्चमत्कारोऽनुभूयताम्—

"पायाद्वः शशिखण्डमण्डितशिराः कैलासकेलीधरः
कैवल्याहितवैभवः सुबलकृत् कामाहितैकप्रदः ।
साराधायकहृद् विरूपनयनानन्दी सदामोदरो
रम्राणीकृतदानवेशसुभगः श्रेयाननाद्याक्षरः ॥"

अनाद्यः अक्षरश्च स शिवः पायादिति दृश्यमानः स्पष्टोऽर्थः । किन्तु–सर्वेषु पदेषु अनाद्याक्षरः, आद्याक्षररहितः सदामोदरः ( आद्याक्षरराहित्येन दामोदरः ) पायात् । तथाच शिखण्डमण्डितशिराः, लासकेलीधरः वल्याहितवैभवः ( वलेः सकाशात् आहितं गृहीतं वैभवं येन ), बलं तत्सामर्थ्यं कृणत्ति सः, मायाः लक्ष्म्या हितस्य एकमात्रः प्रदाता, राधायकहृद् ( राधामयमिति हृद् यस्य ), रूपेण नयनयोरानन्दजनकः, द्राणीकृताः विद्राविताः दानवेशाः श्रेष्ठदानवा येन अत एव सुभगः, इति दामोदरपक्षेऽर्थः ।

न केवलं शब्दचमत्कार एव पाटवं कलानिधिमहाशयस्य । यद्युक्ताः यत्र्यो सरसाः सार्थचमत्काराश्च बहवः श्लोकाः सन्ति । यथा माधवेन्द्रवर्णनप्रस्तावे— .

"माधवेन्द्र द्विषद्रामाः क्षामाः कामार्तितो दधुः ।
बाष्पौघान्तरितौ सायं चक्रवाकाविव स्तनौ ॥
तेजस्विनो विदलितास्तव प्रतापेन, माधव विमुक्तौ द्वौ ।
बाडवतया किलौर्वो मित्रतया चित्रभानुरपि ॥"

( बाडवो ब्राह्मणो बडवाग्निश्च । मित्रपदेन सुहृत्सूर्यौ प्रसिद्धावेव । )

"हास्यं पुष्पाकरस्ते, शशिमुखि सुरते ग्रीष्मकालो, वियोगे
वर्षा, वक्रे तदङ्घ्रौ, वचसि भृशमृतुस्तत्सिद्धहेमन्तकालः ।
अङ्गस्पर्शे च कान्ते तव वसति ऋतुः शैशिरस्त्वन्मो यः ।
संघत्ते संनिधिं ते स भवति षड्तुद्राव्यभोगैकभर्ता ॥
यथा तव कलावृद्धिस्तथा नक्षत्रसंक्षयः ।
नक्षत्राधिप ! नैषा ते स्वधामोद्भटनोचिता ॥" इत्यादि ।

पाठकमहाभागाः ! कियद्वोदाहियन्तां पद्यमुक्तावल्याः पद्यानि । सत्यं सा मुक्तावलिरेव । अथापि किञ्चिदीश्वरविलासस्य राज्ञामैतिहासिकवर्णनौली परिचीयताम् । तत्र श्रीमन्मानसिंहप्रपौत्राणां जयसिंहदेवानां वर्णनम्—

"बद्धा दाराशिकोहं रणभुवि सहसा दोर्बलेनातिनाथ
प्रागेव द्रावयित्वा भृशमनभिमतं यो विजिग्ये शुजारयम् ।
कर्तुं चाकर्णमीशः प्रसभमितरथा कर्तुमप्येष राजा
चक्रे नोरङ्गजेबं निजबलविभवेनैव दिल्लीशमेकम् ॥"

तत्पुत्राणां श्रीमद्रामसिंहदेवानाम्—

"काले प्रालेयहेमाचलयुगलमपि प्रस्खलेत्सागरोपि
क्षोभेण त्यक्तवेलो भवति, न तु चलेद्रामसिंहोतिधीरः ।
सेवाशुम्भावसंभावितमयवनाधीशकाराविमोक्षौ
सद्यो निर्मोच्य भूयस्तदुपरि भर स्वात्मनः सोयमूहे ॥"

( शिवाजीसंभाजीनाम्नोः राजपुत्रयोरे तथा प्रसिद्धिः ) ।

सवाईजयसिंहदेवानाम् ( जयपुरराजधानीप्रतिष्ठापकानाम् )—

"द्राकस्भयीस्तडागोपरि परियतितं यद्यमारवमसर्प-
त्सेनावीरेन्द्रवर्यप्रकरकरचलत्तीक्ष्णकौक्षेयकाग्रैः ।

उच्चैरास्फालुकृत्तं पुरहरमहिषीमुण्डमालाप्रसूत्र-
प्रभ्रष्टं मुण्डवृन्दं क्षितिरजसि लुठत्सैःश्वसत्सैयदानाम् ॥
यस्योद्यद्विपदानवारिभिरभूत्स्नानभूः पङ्किला
सा नीता प्रकृतिं चलत्खुरपुटैरश्वैः कृतोर्ध्वश्रमैः ।
इत्यालक्ष्य कृतत्रपैरिव गजैरुत्क्षिप्तशुण्डोच्चल-
द्वारिभिर्व्योम्नि रजोभरः शमलितो जम्बालपिण्डायते ॥
यत्तुङ्गोत्तुङ्गरिङ्गत्तुरगखुरपुटाक्रान्तविद्वेषिदेश-
क्षोणिप्रोद्यद्रजोभिर्व्यरचि दिवि परं भूतलं श्यामवर्णम् ।
यद्वीरेन्द्रासिकृत्तप्रतिनृपतिपदस्थापनाधारतायै
प्राङ्के यद्वारणेन्द्रैः प्रचुरकरपय-सीकरैर्द्रावितं तत् ॥
यस्य क्ष्माभृत्सहस्रस्फुटमुकुटमणेर्जैत्रयात्राप्रसङ्गे
माद्यद्दन्तावलोद्यत्तुरगचयचमूचङ्क्रमोद्भूतभारैः ।
मग्नीभूतासु वेलास्वतिचपलपयःसङ्घसंघर्षधाव-
त्कल्लोलाक्रीडशाली जयति जलनिधिर्जैत्रनिःसानघोषम् ॥
साधीयान् यस्य बाहुः समरमखमहादीक्षया लब्धकीर्तिः
शस्त्राग्न्याध्मानवेदध्वनिजनितविधिर्वीरमद्दस्विक्परीतः ।
जातप्राज्याऽसृगाज्याहुतिसततपरिस्निग्धया खड्गदर्व्या
चण्डक्रोधाग्निकुण्डे सकलमपि बलं सैयदानां जुहाव ॥"

यावदुपलब्धेऽस्मिन्नीश्वरविलासकाव्ये प्रत्य एवंविधैव समुच्छलदोजः-प्रशस्तिवर्णनपद्धतिः । इदानीं तद्यशास्त्रपारदृश्वनः श्रीमतः कलानिधिमहाभागस्य 'सुन्दरीस्तवराज'स्य किञ्चित्परिचयः प्राप्यताम् । त्रिपुरसुन्दर्याः स्तोत्ररूपोयं ग्रन्थ इति ॥ पूर्वमुक्तमेव । अत्र हि शिखरिणीच्छन्दोभिः सुमधुरो गुम्फः प्रकटितः कविकलानिधिभिः । यथा हि—

"कलावेलीलोलक्वणितमणिकाञ्चीगुणगणां
विलुसाङ्गी मध्ये कुचभरनताङ्गीं शशिमुखीम् ।

१ निसान, नक्कारा ( दुन्दुभिः ) ।

कराम्भोजभ्राजत्सधनुरिषुपाशाङ्कुशवरां
समन्तात्त्वां वन्दे स्मरहरतपःसिद्धिपटलीम् ॥
स्थिता सर्वस्यान्ते निजमहिमशान्तेन महसा
विशुद्धा त्वं काचित्परमसुखचैतन्यकलिका ।
शुकादीनां प्राचामपि हृदयवाचामविषयः
शिवः शक्तिः शक्तिः शिव इति न निर्णेतुमुचिता ॥"

सृष्टिक्रममालम्ब्य कीदृगुदीरितं भगवत्याः स्तुतिपरेण कलानिधिमहाभागेन—

"त्वमेका विश्वस्मिन् रमणमनसा द्वैतमकरो-
स्ततस्त्वत्त्वं जज्ञे महदिदमहङ्कारसहितम् ।
मनस्तेनारब्धं सकलमपि दृग्दृश्यमसृज-
त्तदेवं लोकेऽस्मिन् किमपि न विलोके त्वदितरत् ॥"

इदमतो भक्तिप्रवणता श्रीमतः कलानिधिमहोदयस्य—

"जगत्क्षोभिण्याद्यास्तव जननि मुद्राश्रिभुवनं
सृजन्त्यः पुष्णन्त्यो लयमपि नयन्त्यः समुदिताः ।
कथं ताः कुर्वेऽहं सकलभुवनव्याप्तविभवाः
प्रपद्यान्तर्मातर्मशक इव लीनाकृतिरणुः ॥
न धूपैर्नो दीपैर्न च मधुरनैवेद्यनिवहै-
र्न पुष्पैर्नो गन्धैर्न च विविधबन्धैः स्तुतिपदैः ।
समस्तत्रैलोक्यप्रसरणलसद्भूरिविभवे
सपर्या पर्याप्ता तव भवति भावोपचरणैः ॥
दरिद्रं दुःशीलं दुरधिगमनं दुःखदलितं
दुराचारं दूरे पतितममरैर्दुर्भरतरम् ।
जनैर्मुक्तं मुक्तिप्रमुखसुखसम्पत्समुदयाः
पुमांसं सेवेरन् भगवति भवद्दृष्टिभरितम् ॥
पिबन्तं पङ्कं सरभसमवष्टभ्य पिबति
द्विपास्ये सक्षेहस्तवणसरसो दक्षिणकुचः ।

परो मातः स्कन्दोपरि सकरुणस्यन्दमधुरः
स्तनस्ते तं भावं प्रकटयतु मल्लक्षणशिशौ ॥"

सम्प्रदायमार्मिकता स्थाने स्थाने प्रस्फुरन्ती किञ्चिदिहाप्यनुमीयतां पाठकमहाभागैः—

"त्रिरेखान्तर्वृत्तत्रयगत(हृदे)ष्वाष्टदलयोः
परस्माद्वृत्तैकस्फुटभुवनकोणान्तरगते ।
दशारद्वन्द्वेऽन्तः स्फुरितवसुकोणान्तरलस—
त्त्रिकोणे त्वं नित्यं विलससि महाबिन्दुवपुषा ॥
मुखे बिन्दुस्फूर्तिस्तव हसपरार्धाकृतिमयी
कुचद्वन्द्वं बिन्दुद्वयहसपरार्धाकृतिमयम् ।
कलारूपे मातस्तव हसपरार्धाकृतिमय—
स्त्रिरेखाविस्फूर्त्या परिलसति पूर्णावयविता ॥
निदानं मध्यानां विलसति धरित्री हिमकरः
शिवो मायाशक्तिर्ज्वलनजननो मादनकरः ।
तथार्धेन्दुर्बिन्दुर्नवकमिदमस्मादुपचिता—
त्तदङ्गन्यायेन स्फुरति सकलो मन्त्रनिवहः ॥"

स्वरूपवर्णनपद्धतिर्दर्श्यतां कविकलानिधेः—

"स्फुरच्चिन्तारत्नप्रवरपरिपत्पाटवहरैः
प्रकाशैः पूर्णानां भुवनजनचेतोरुचिभृताम् ।
नवीनोद्यत्तारापरिवृढसखानां चरणयो—
र्नखानां ते कान्तिक्षिरयतु मम स्वान्ततिमिरम् ॥
प्रयाणश्रीसर्वापहरणविलोलाङ्गुलिगणाः
स्फुरद्रक्ताम्भोजद्युतिविजयिमाञ्जुल्यनिलयाः ।

१ अतिजीर्णे साक्षात्कलानिधिमहाशयस्य स्वहस्तलिखितेऽस्मिन्पुस्तके स्थाने स्थाने पत्रविदारणेनाक्षराणि लुप्तानि । अतलवधानेन, अनुमानेन यानिचिन्मया स्थापितानि । परं सम्प्रदायस्येऽस्मिन्नाहं प्रभुः । अत्र कियत्तीति मार्मिको जानीयात् ।

चतुर्वर्गश्रेणीफलयुगपदुद्भावनकराः
करास्ते चत्वारः कलयितुमलं शर्म विमलम् ॥

रसक्रीडामाने प्रणयिनि रुषेवारुणितयो-
स्ततो नीचीभूतत्रिदशधुनिवीचीविशदयोः ।
प्रसादप्रोद्भूतप्रचुरसुखसौभाग्यपदयोः
स्थिरं स्यान्मच्चित्तं गिरिशमहिषि त्वत्पदयोः ॥

शिवे शय्यावेश्मोपगमसमये भूरिसुखदै-
र्धृतं हंसानां मत्तोमृदुवचनचमत्कारुचिरैः ।
कलक्वाणैः प्राणभद्रमिव गिरीशश्रवणयो-
रिदं ते हंसानां हरति हृदयं हंसकयुगम् ॥"

पाठकमहाभागाः ! कियद्वोदाह्रियताम् । अस्य स्तोत्रवरस्य नवोत्तरशतं श्लोकाः सर्वेऽप्यहमहमिकया युगपदुपतिष्ठन्ते । हन्त ! स्थाने स्थाने विदीर्णपत्रमिदं पुस्तकं भूयसापि परिश्रमेण कदाचित्साङ्गं भवेन्न वेति विशङ्कैव । नोपनिबद्धं कविकलानिधिमहाशयैः केवलं गीर्वाणगिरायामेव, अपि तु प्राकृतभाषानिगुम्फनपाण्डित्यमप्यविकलमासीदेषां महोदयानाम् । इदयन्तामिहोद्धृताः काश्चन माधवेन्द्रगाथाः—

"माहवणिवकित्तीओ फुल्लिअविअइल्लमालइवणाइं ।
सअलकइमहुअराणं साणंदविणोअकारणाइं धुअम् ॥
सरसगुणकव्वमज्झे जेत्ताओ सुकइकण्ठम्मि संठविआ ।
तेत्ताणं उवमाणं तुम सि माहवणरिन्द दप्पणओ ॥

---

१ माधवनृपकीर्तयः फुल्लविचकिलमालतीवनानि ।
सकलमधुकराणां सानन्दविनोदकारणानि ध्रुवम् ॥
सरसगुणकाव्यमध्ये यावत्यः सुकविकण्ठे संस्थिताः ।
तावतीनामुपमानां त्वमसि माधवनरेन्द्र दर्पणः ॥

ओणीदं विजआए माहव तुव किित्तिमुत्तिअमणग्घम् ।
धरिऊण इक्ककण्णे पइट्ठिआ पव्वई हरद्धङ्गे ॥
सूरो चन्दो इन्दो तुलासु माहवणिवेण संतुलिदो ।
अहि भुइ गुरुओत्ति तुमं लहुआ अण्णे दिवं जादा ॥
अरुणग्गमे व्व तिमिरं तुह लोअणकोणसोणिदाभासो ।
माहवणरिन्द जुज्झम्मि एस णासेइ पडिवक्खम् ॥" इत्यादि ।

पाठकमहाभागाः! विलोकितमेव श्रीमद्भिर्यत्कलानिधिमहाभागः संस्कृतसाहित्ये कीदृशीं काष्ठामारूढः । उपनिषदां मर्मवेदिताऽमुष्य तासां हिन्दीमयानुवादात्स्पष्टमवबुध्यते । मीमांसादिशास्त्रेष्वपि पाटवं स्थाने स्थाने प्रसङ्गसङ्गत्याऽवबुध्यते । यथा तूक्तं हरिहरभट्टैः 'कुलप्रबन्धे' पूर्वम्-

"मीमांसापरिशीलने पटुमतिः सांख्याब्धिपारंगमो
न्यायानर्गलवाक्प्रपञ्चचतुरो वेदान्तसिद्धान्तधीः ।
काव्यव्याकृतिवृत्तकोषकुशलोऽलङ्कारसर्वस्ववि-
च्छ्रीकृष्णः कविपण्डितो विजयते वाणीविलासालयः ॥"

तदेतदविकलमुक्तमिति । एवं संस्कृतवाङ्मयाम्बुनिधिमन्थनमन्दरायितस्याप्यस्य व्रजभाषारचनायामसाधारणं पाटवम्, विशेषतस्तैलङ्गकुलप्रसूतवया सुदूरदेशगायामस्यां व्रजभाषायां सर्वतोमुखमधिकारम्, मधुरवर्णमैत्रीनैपुणं चावलोक्य कस्य वा सचेतसो न प्रसीदेद्धृदयम् । एतस्य प्रमाणमलङ्कारकलानिधिप्रभृतयो व्रजभाषाग्रन्थाः, येषां सूची पूर्वं प्रत्ता । प्रसङ्गेन कतिचित्पद्यानि अलङ्कारकलानिधेरुदाहृतान्येव । परं यावद्यं

1 आनीतं विजयया माधव तव कीर्तिमौक्तिकमनर्घम् ।
धृत्वा एककर्णे प्रविष्टा पार्वती हरार्धाङ्गे ॥
सूर्यश्चन्द्र इन्द्रस्तुलासु माधवनृपेण संतुलितः ।
अधिभुवि ( अधि भुवि ) गुरुक इति त्वम्, लघवोऽन्ये दिवं याताः ॥
अरुणोद्गम इव तिमिरं तव लोचनकोणशोणिताभासः ।
माधवनरेन्द्र युद्धे एष नाशयति प्रतिपक्षम् ॥

मुदितो भवेत्तावदेतेषां कलानिधिमहाभागानां भाषाकविवरकोविदतामव-गमयितुं संमुखमुपस्थितानि कानिचित्पद्यानि पुनरुदाहियन्ते । मन्ये मानेन पाठकमहाभागानामरुचिरुदयेत् । तत्र रामवर्णनप्रसङ्गो यथा—

"पारथ करन अरु भरथ भगीरथसे
कानति सुनत गुनतेंही छिन छटिगो
द्वारै पाइ धारै मदमोकल मतंग मद-
बीचिनके कीचनके बीच ह्वै रपटिगो ।
रामचन्द्रभूप कर देखत तिहारे सर,
मोती मनिमानिक की लागति ही छटिगो
दिन दिन दानदरियावकी लहरि यहि
दारिदको बंस छितितलसों दछटिगो ॥ १ ॥
छूटत हवाई दीह दौर की दवाई अंत-
रिच्छ छवि छाई तारकासे परकासे हैं
छूटैं गुलचंपा चंद्रज्योति की सवाई ज्योति
छूदें इगफूल फूल दीरघ बिकासे है ।
जयसिंहभूपघर दीपमालिका के मिस
क्याल खरे भातिसके भांति भांति भासे हैं
जीति अरिभौनानकों भाए आज आगें ठाढ़े
मानहुं प्रताप तेज करत तमासे हैं ॥ २ ॥
थप्पन उथप्पन, सपच्छ अरिदप्पनके
छप्पन करोर जादौं कप्पन कलेसजू
चप्पन प्रताप तेज तप्पन के जासु जस
अप्पन औ अप्पन समप्पन हमेसजू ।
होत यकबीस बिसेंबीस बीस तीस सुर-
ईसके सीस पै द्विज दीननिके पेसजू
जयसिंह दानी तुम्हैं होहु सुखदानी द्वार-
काके राजधानी राजैं राजा द्वारकेसजू ॥ ३ ॥

आजु दसराहेके उछाह कविलोग तुम्हें
देतहैं असीस सुनियेयों सावधान होहु
उमरि दराज मारकंडेमुनिमाने होहु
कीरतिप्रताप ससिसूरज समाने होहु ।
पारथ ज्यों वीर जगजाने होहु जयसाह
चित्तके प्रमान निस चित्तके खजाने होहु
बाजते सदाने होहु देश आबादाने होहु
रंगभरे बाने होहु साहिमनमाने होहु ॥ ४ ॥"

ओजोऽनुकूलगुम्फो यथा—

"छप्पय—भांति गरजि घन गज्जि, तडित जिमि खंभ तडक्किय ।
प्रगटिय वपु विकराल, असुरधर काल कडक्किय ॥
सटकत विकटजटानि, झटकि घनघटा झटक्किय ।
विज्जुछटा लपटात, हटकि गिरितटनि पटक्किय ॥
घहुडड्ड घट्टि चट्टिय नभहि भट्टिय रवि रट्टिय ससिय ।
जुरा रोस सांस नरसिंहके, सत्तलोक ऊरध ग्रसिय ॥ ५ ॥

अमृतध्वनि

"तरलित होत भुजंगवर, परत गंग उत हस ।
जटाजूट छुटत जवहिं, नृत्तत हर नित्त ॥
नृत्तत्तहर नित्तवहि दुचित्त त्रिभुवन ।
चित्तजत पुनि तित्तत्तहिं न मित्तत्तसु मन ॥
सित्तसजगुन मित्तत्रिदस पवित्ततरनित ।
जि सपससि मित्तसकहिं चकित्ततरलित ॥ ६ ॥
जय जय सुरनर उचरत, गनपति करत गरज्ज ।
बज्जत बज्जन विबुध, सज्जत सुभकज्ज ॥
सज्जत सुभकज्ज लग गज्ज गरज्जत धन ।
तज्जत अति लज्जगवरि सुरज्जत मन ॥
भज्जिमि सिर छज्जमालनि निमज्जमन चय ।
भज्जतजुतरज्जतभरि बज्जय जय ॥ ७ ॥"

शृङ्गारविषयकवर्णनम्—

"दीपति दिवारीसी दिपति देहदीपतिसों
 दामिनीसी दमकै न दिन ■ दुरति है
राजत अनंग तरुनाई के तरंग रति-
 रंग के उमंग अंग अंग अंकुरति है।
अतरके सौरभमें तर ह्वै रहे हैं अति
 सतर उरोज देखि भूली गति मति है
देखो 'लाल' रूप धरैं रूप है कि, रस है कि,
 रंग है कि, रंभा है कि, रमा है कि, रति है॥ ८॥
लहँगा ललित लाल लाहीको लसत, तैसी
 चोएसीनीं चोली कसी कुचनि बनाइसों
सकलसिंगारनिसों सजिन सिंगारी प्यारी
 पहरि किनारीदार सारी चितचाइसों।
सौंधेके सलिलसने लिकसिले केस लसैं
 छूटे मुखनलिन पै अलिनके भाइसों
आजुही अन्हाइ आइ आननउजास ओप,
 सादेही सिंगार साज सोहति सुभाइसों॥ ९॥
कुचतट निपट मिटानो अरगजा, छूट्यो
 अति ही अधरराग मंजन सुभावरी
नैननिके दूर दूर अंजनकी रेख मिटी,
 पातरेसे गातनि पुलक दरसाव री।
दूतिनकी बानि झूंठ बोलियोई जानि होत
 बंधुहितहानि जानिये न आपु घाव री
वा सठसमीप ही पठाई तू न गई तहां,
 बावरी अन्हान कों गईही आजु बावरी॥ १०॥
गृहपति गये गैया चसर चरावन कों,
 सासरे ननद, परी सास सो ससुरिया

रजाई है सिरक घर आंगन परोठी धटा,
आजु रैन चीरनिके मनोरथपुरिया ।
सोचति परोसनि सुनाइकें सुघर ग्वारि
कारु त्यों निहारी पुनि आनँदनिधुरिया
तरकि तरकि गई तनीं अँगियाकी तनीं
फरकि फरकि गई करनकी चुरियां ॥ ११ ॥
चाइभरे पियमुख चाहि न सकत चख,
होती जहां रावे दुहूं नैननि झकाझकी
मौंहनिके भंग संग भज हू भ्रमत भूले
बरुनी विरहि पलकनिके धकाधकी ।
केसरिके खोरि भाइ लीने अति छाइ छाइ
छविकी छटानि छिन छिननि छकाछकी
कुंडल झलक प्रतिझलक कपोलतल
अलकतिलक चकचौंधनि चकाचकी ॥ १२ ॥
रति है न समजाकों अति है अनूप रूप,
अँग लसी सारी जरयसीकी सुरंग है
अंजनकी रेख अलिगंजन चातुर नैन
अलसासो लहै मीन खंजन कुरंग है ।
लोटनके जोर लगी जगमगी जोति लसै
लगयगी सौंधें कौंधे बीजुसी सुरंग है
कंचुकीके बंद कसें, उरज उतंग लसें
संगकसें मानहु अनंगके तुरंग हैं ॥ १३ ॥

श्लेषचमत्कारो यथा—

* "चारों ओर बात चलें कछु न बसात
अति कंपत हैं गात गुरुलोक घन गरजी

---

* अस्मिन्पद्ये शीतभीतस्य 'रजाई-' (तूलभृतप्रावरण-)-निमित्तं प्रार्थनं तु स्पष्टमेव । अस्मिन्पक्षे—'बात' वातो वायुः । 'बसात' न कश्चिद् गन्धः

धूमांभरी सास ननदीके पास वास, कोऊ
बैठिबेकी आस न खरोंही काम तरजी ।
आली महिं ओसी अति दुखद परोसी
घर भीतरन जागैं सब भांतिनसों लरजी
दुतही करी ना नहिं कुलहीन पाई लाल
रावरी रजाई कोऽब हाथ जोर अरजी ॥ १२ ॥"

एवंविधानि परःसहस्राणि पद्यानि स्वयं निर्माय अलङ्कारकलानिधौ कलानिधिभिरुदाहृतानि । सांभरपुस्तकप्रकृतयो ग्रन्थास्तु नाद्यावध्युपलब्धाः, अत एव तन्नत्यं विषयमादर्शयितुं नाहं प्रभवामि । परं कवितारत्नपरीक्षका इयतैव परिज्ञास्यन्ति यत्संस्कृत–प्राकृत–व्रजभाषासु समानं कवयतः कलानिधेः कियती कवित्वशक्तिरासीदिति । अपि एषु त्रिशतवत्सरेषु सहस्रेषूपलभ्येत ताहक्शक्तिशाली कविः ? अस्तु–वंशपरिचयप्रसङ्गे प्रमुपप्रासङ्गमिदं श्रीकृष्णभट्टानां जीवनवृत्तं यावदुपलब्धि पाठकानां सेवायामुपस्थापितम् । यद्यपि अनेन विस्तरेण कदाचिदुद्वेजकेऽपि च न महोदयानामरुचिः, परमारम्भे (जयपुरवैभवाख्यस्य पूर्वखण्डस्यारम्भे) "तुलसी–सूर–बिहारि–कृष्णभट्ट–भारति–मुखाः" इत्युपश्लोकनमेषां विस्तृतं परिचयमपेक्षत इति तथानुष्ठितमित्यलमधिकोपचारेण ।

---

प्रतीयते । गर्जनकारका घनाः ( मेघाः ), तेनातिशीतवृद्धिः । 'सास' श्वासः । 'न नदीके पास' शीतवत्याश्रयाः समीपे वासो न । 'कोऊ' ग्रामीणानामन्याधारस्थानम् । 'आली' आर्द्रा 'मही' भूमिः 'ओसी' अवश्यायपुक्ता । 'सी' शीतं अतिदुःखदं पतितम् । 'न जागैं' गृहान्तर्नावकाशो, वृष्टेः । 'दुतही' द्विस्तरयुक्ता 'दुलाई' न कृता । 'कुलही' उष्णीषिका ( टोपी ) न प्राप्ता, इत्यर्थः । पक्षान्तरे तु–नायिका गृहे संकेतावकाशाभावात् 'रजाई' गमनानुमतिं याचते । तत्र—गुरुलोकास्तर्जनकारकाः । 'सास' श्वश्रूः प्रघूर्णिता । आली सखी 'महिं' अभ्यन्तरे 'ओसी' अवसरापेक्षिणी । प्रतिवेशिनः गृहाभ्यन्तरे जाग्रति । 'दुतही' दूती नास्ति । अहं कुलहीनापि नास्मि । अत एव कुलजायां मेऽनवसरदत्तानुमतिप्रदानमेव योग्यमिति गूढोऽर्थः ।

## सुकविः श्रीद्वारकानाथभट्टः

(सरस्वती. वाणी. भारती.)

श्रीकृष्णाख्यकोविदादमुष्मादाविरासीदथ
भूरिभाग्यभासी द्वारकानाथो महामना
यो हि कविश्रेष्ठो वन्दनीयो बुधपुङ्गवानां
ज्येष्ठो जगदीशकवेर्नूनं निजजन्मना ।
गुणगणवैभवेन तातमतिशेते यो हि
कीलयते कोविदानपीह यस्य कल्पना
'भारती'तिनामवहा भारती विभाति यस्य
हंहो देवी भारतीव कविवदनाऽऽसना ॥ १२ ॥

भूरिभाग्येन भासते तच्छीलः । महत् मनो यस्य स महामनाः, यकारपरत्वाद्विसर्गलोपः । जन्मना, जगदीशकवेर्ज्येष्ठः । एवं च कविकलानिधेः श्रीकृष्णभट्टस्य द्वौ पुत्रौ, द्वारकानाथो जगदीशश्च । तत्र जगदीशकविश्चिम्मनलालस्य दत्तकोऽभूदित्यग्रे स्फुटीभविष्यति । एतेषां संस्कृतकवितानिदर्शकानि नाधिकानि पुस्तकान्युपलभ्यन्ते, परं व्रजभाषाकवित्वे वास्तोपि माधुर्यमेषां कवितास्वनुभूयते । 'भारती'त्युपनामाङ्किता यस्य भारती (वाणी) वाग्देवीव कविवदननिवासिनी, कविभिरादृतकविता इत्यर्थः ॥१२॥

यद्वाणी विभाति वाणीनूपुरानुकारिणीव
भाषामपि तां रसानुसारिणीमयामहे

साहित्यानुबन्धिनो निबन्धान् यैः प्रणीतानहो
चौरचयनीतानद्य हन्त न लभामहे ।
'सरस्वती' 'वाणी' 'भारती' ति नामधेयवहान्
मोदितमहीन्द्रमाधवेशान्महयामहे
सौष्ठवसनाथरम्यरचनाचमत्कृतिकान्
श्रीद्वारकानाथकविपुङ्गवान् कथामहे ॥ १३ ॥

येषां भाषामपि माधुर्यवशात् रसानुकूलाम्, भयामहे जानीमहे । सर्वे शब्दार्थो ज्ञानार्थाः । यतो हीमे साहित्यातिरिक्तं संगीतशास्त्रेपि परिनिष्ठिता आसन् । अत एवैषां कवितायां वर्णकृतं माधुर्यमधिकमनुभूयते । एभिः संगीतशास्त्रे 'रागचन्द्रिका' नामको ग्रन्थो विरचितः । 'मधुकरकलानिधिं' विहाय साहित्यसंबन्धिनोऽमीषां ग्रन्था: केपि नोपलभ्यन्ते । ते किल सुन्दर-कालशर्मणः समये चौरचयेन नीता इति भ्रमे स्फुटं भवेत् । कथामहे कवितया उपश्लोकयामहे । कुथ शब्दे ॥ १३ ॥

दो०—'सुकवि'–'भारती'त्युपपदं ददे सूक्तिसुहितेन ।
जयपुरमण्डलमघवता माधवधरणीपेन ॥ १४ ॥

पितुः श्रीकृष्णभट्टकविकलानिधेः स्वर्गयात्रोत्तरमेतस्य सरससूक्तिभिः सुहितेन तृप्तेन श्रीमता माधवसिंहदेवेन (प्रथमेन) 'सुकविः' 'भारती'-त्युपपदं प्रदायि ॥ १४ ॥

बुन्दीपतिरपि भृशममुं दीव्यति स्म विनयेन ।
येन सोयमलमर्चितः पूर्वजनृपतिनयेन ॥ १५ ॥

पूर्वजैर्नृपतिभिर्यथा द्वारकानाथमहाभागस्य पूर्वजाः श्रीकृष्णमहोदयः सत्कृताः, एवं तत्सामयिकबुन्दीनरपालोपि एनं सुभृशं पूजयति स्म । एतस्य वंशजानां सविधे बुन्दीधराधीशेन प्रहितमेकं राजकीयपत्रं वर्तते, यत्र पृथ्वी-सिंहनृपेण स्पष्टं लिखितमस्ति यद्भवन्तो मम पितृस्थानीयाः किमधिकमद-

मावेदयामि । मम जीवनदशापर्यन्तं नास्मिन् भावे परिवर्तनं भवेदत्र परमेश्वरः प्रमाणमिति । तदेतत्पत्रं सौवर्णरेखाभिर्लिखितमतिप्राचीनमपि सुभगमवलोक्यते । एवं दानबहुमानादिभिः पूर्वजनृपतिपद्धत्या बुन्दीधराधीशेन सोयं पूजितः ॥ १५ ॥

## चरित्रसंग्रहः



जयपुरधरणीन्द्रस्य माधवसिंहदेवस्य सोयमतिप्रीतिभाजनमासीत् । अहर्निशं श्रीमान्माधवेन्द्रः कवीन्द्रमिमं स्वसहचरमेव चक्रे । दानबहुमानादयोपि भूरिशोऽस्य कृताः । ग्रामादिभूसम्पत्तिरप्यस्मै अवश्यमेव अदास्यिष्यत, परं श्रीकृष्णभट्टकविकलानिधेर्लोप्ता ग्रामद्वयं माधवेन्द्रस्य समय एव पश्चात्कृतमभवत् । अत एव राजकर्मचारिभिरन्यापि विधिः प्रतिषिद्ध इति श्रूयते । मुक्तककविरवेषु श्रीमतो माधवेन्द्रस्य यशोवर्णनमस्त्येव, परमेतस्य मनःप्रसत्तये 'मधुकरकलानिधिः' नाम शृङ्गाररसग्रन्थो विरचितः । अत्र हि 'मधुकरराज'नाम्ना श्रीमतो माधवेन्द्रस्य व्यपदेशः कृतः । अत्र हि शृङ्गाररसस्य समग्राङ्गानां सविस्तरवर्णनमस्ति, उदाहरणानि च सर्वाणि माधवेन्द्रवर्णनात्मकानि । अस्मिन् किल कविना माधवधरणीन्द्रस्य महिमैव चामत्कृत्यं स्थापितम् । शब्दार्थौ हि भूयोगुणीकृतौ । ग्रन्थारम्भे प्रोक्तं हि तेन—

"सबद अरथ जीरणबसन, छवि तंदुल गुनगाथ ।
माधव मोऽब सुदामसों कस्रो द्वारकानाथ ॥"

अहो कीदृशी ध्वनिगर्भा सूक्तिः । कविः कथयति—शब्दार्थाविमौ मद्गतौ जीर्णवसनस्थानीयौ, यतो हि सार्विमायनादितः सर्वैः कविभिः प्रयुक्तप्रायौ । अत एव जीर्णवसनान्तरिता भवद्गुणगाथैव सुदामतंदुलोपमो हेयमुपहारः । किञ्च सन्दुलग्राही पुरुषस्तदुपरिवेष्टितं वस्त्रं नापेक्षते । एवमेव

भवान् जीर्णवसनमदृष्ट्वैव गुणगाथायां दृष्टिं दद्यादित्यात्मनो विनयः सूच्यते। भवांश्च माधवस्तत एव भवद्गुणबाहुल्येपि मदुपस्थापितान् कतिपयतन्दुलानेव गृहीत्वा सोयं सुदामसदृशोपि जनो द्वारकानाथो विहितः।

जयपुरेन्द्रस्य माधवसिंहदेवस्य स्वर्गारोहणोत्तरं श्रीमता पृथ्वीसिंहनरपालेन, सकलगुणिजनशरण्येन प्रतापसिंहभूपेन चापि सोयं सुबहु मानितः। पृथ्वीसिंहमहाराजस्य पठनार्थमनेन कौमुद्या अनुवादरूपा 'शब्दचन्द्रिका' निर्मिता। श्रीमान् प्रतापसिंहदेवोप्येनं कवितामाधुर्यमुग्धः सुबहु सत्करोति स्म। एष ह्येतस्मै कवीन्द्राय 'भारती'त्युपपदमर्पयामास। एतस्य परिचयप्रसङ्गे 'मण्डनकवीन्द्रेण' रायकचरित्रकाव्ये यदुपनिबद्धं तदधस्तादुद्ध्रियते—

"तिनके ( श्रीकृष्णभट्टजीके ) तिनहीसे भये तनय द्वारकानाथ।
माधवेश महिमासुके रहे रैन दिन साथ॥
प्रभुकों राजी कर लियो 'सरसुति' 'सुकवि' खिताब।
जिनके जगमें जगि रहे सुजस सरदमहताब॥
पृथ्वीसिंह, परतापको किय गुनसों भरपूर।
यातें भारति नाम लिय जगमें रह्यो जहूर॥
कविकुल और कवीन्द्र नित, नृपमुख बोले बैन।
पृथ्वीसिंह परतापसों पाये निसिदिन चैन॥"

अद्यावध्युपलब्धा एतस्य ग्रन्था इमे सन्ति—व्रजभाषायाम्–मधुकरकलानिधिः, वाणीवैराग्यम्, श्रीमत्प्रतापसिंहसभासदानां पद्यैर्वर्णनम्, रागचन्द्रिका, शब्दचन्द्रिका, पृथ्वीसिंहमहाराजस्य विवाहोत्सवः ( पृथ्वीसिंहमहाराजको ब्यावलो ), बुन्दीनरेशस्याज्ञया निर्मितोऽलङ्कारग्रन्थः ( यस्य पत्रभ्रंशेन नाम न विदितम् )। संस्कृते–गालवगीतम्–यद्धि पाठकैरवलोकितमेव जयपुरवैभवाख्यपूर्वखण्डस्य गालवाश्रमवर्णनप्रसङ्गे। अन्यान्यानि च वृक्ष–पक्षि–वर्णनात्मकान्यस्य संस्कृत–पद्यानि प्राप्यन्ते। वाणीवैराग्यं भर्तृहरिकृतस्य वैराग्यशतकस्य व्रजभाषापद्यैरनुवादः, यस्यादर्शः किञ्चिदग्रे दास्यते। एतेषां कृतिरेतद्वंशजानां सविधे समग्रा नोपलभ्यते। अत एव नैतेषां ग्रन्थानां विषये किञ्चिद्वक्तुं शक्यते। एतेषां कवितामाधुर्यनिदर्शनानि

कानिचित्पद्यानि 'मधुकरकलानिधि'प्रभृतिभ्यो ग्रन्थेभ्यः समुद्धृत्य पाठका-नामवलोकनाय संगृह्यन्ते—

"बरनविचार रघुगुरु लोक लीकनसों
साधि सोधि रसनाके सुबरन पत्रपर
कर चितहीतें चतुराई चारु लेखनि छै
रचद भरम रंग व्यञ्जनि उजास धर।
'सरसुति' राधिका कुंवर ब्रजचंदजूके
रूपकी घटानि बरसावैं रसरंगहार
नेहके नगर जग जागर मगर ऐसे
सुघर सुघर वंदौ भारतीके चित्रकर ॥ १ ॥

बानीजू हो जगरानी सही पदपंकज रावरे जे नर ध्यावैं
ते नर उत्तमपूरनपियूसनी मृदु काव्यकला परसावैं।
मानभरे गुनज्ञानभरे बहुभीमघवाननकों ते रिझावैं
कीरति चन्द्रिकाचन्द्रसमान समानहिं ते ही कवीन्द्र कहावैं ॥ २ ॥"

राजवर्णनप्रसङ्गे—

"बजत सदाने रणथंभ घिरधाने सुनि
अरि थहराने हैं पराने कुल टेसके
केतक भमाने पुनि तेगनसों भाने, ते पै
भरत रजाने आन माने देस देसके।
राजाराव राने अरु खानसुलताने केते
हुकमी बखाने 'सरसुति' दलबेसके
याने परतापके गुहाने जगजाने आज
जयके निसाने फहराने माधवेसके ॥ ३ ॥

परमसवाई माधवेसके हुकुम जोध
जाटनपै झारे झुकि सारनके अल्के
कटि कटि परें बार बेसुमार बैरिनके
शृगिन विसाल मांसग्रास लेत हल्के।

'सरसुति' तहां संभुसाहिबी सराहिबो यों
    धाये छिति प्रेतनि करेजे लोहू छलके
चांवडाके भावनकों मांवडाके खेत महिं
    पांवडा बिछाये मानों लालमखमलके ॥ ४ ॥
कोटापै कुपित माधवेस असवार होत
    स्वच्छ कच्छवाहे वीररस अभिलाखे हैं
धाये धूत धींग, धीर धौंसनि धमकै धरा
    धूरे धूरि सूरससि गगनगवाखे हैं ।
उप्परी उडत बैरीखुप्परी कराकन सों
    भभकत लोहू, झुंड झुंड काटि नाखे हैं
मानहुं पसंगरंग कालीकाल खेलनको
    फागुसमै कंचन कचोरे भरि राखे हैं ॥ ५ ॥"

हयवर्णनादर्शः—

"कलित कलंगी सिर, कलित लगाम मुख,
    ललित जराउजरी जीमन धरे रहैं
छाती छुवैं पाइन कराइनके मोरनमें
    मोरि ग्रीव नटकी कलानिकों करो करैं ।
ऐसे रघुबंसी माधवेसके बिलंद हय
    केते राव राने जिन पायरे तरे रहैं
अकरे खरीदनिके उकरे दुबागनसौं
    पकरे रहैं तौहू पौनसों भरे रहैं ॥ १ ॥
जोर करि दौरतमें मनहूके आगें होत
    उचके समुद्र अँगबीचिन के बीच है
सरसुति रबिके तुरँग जिहिं देखनकों
    खनकों रहत दिनसाँझ ठकाठींच है ।
ऐसो रघुबंसी माधवेसजूको मोती हय
    सलज चलत जिहिं पौनहू नगीच है

मेरे जानि देवराजहीको याजिराज यह
रपटि परो है देवतटिनीके बीच है ॥ ७ ॥"

गजवर्णनादर्शः—

"जहँ कोट गढनि गनीमनके मत्यधरि
सुंडनसों राहँ रोकि रहत अरसकीं
धीरैं धीरैं धारत चलत चरननि तऊ
धसकी धरासों लेत सेससीस ससकीं ।
साहिब राजाधिराज माधवेस कूरमके
ऐसे इभ जिहँ सरसुति कह न सकीं
देत दान मद जे मिलिन्दनकों एही देत
दन्तन कपट कहीं कन्दलैं सुजसकीं ॥ ८ ॥
सांवनके घनज्यों सुहावन विलंद कद
मद बरसावन जे पोरैं जस कंदकों
घुरत निसानसे घनेरे घोरघोस जिन
धूमत फेर जे कपोंं सुंडनिके छंदकों ।
सरसुति सिद्धिभरे कुंभजुग कुंभनसों
दारिद बहाइ करैं आनँद अमंदकों
मेरे जानि ये ही माधवेसके मतंगवर
दपन दै राहुसों उबाँर रविचंदकों ॥ ९ ॥"

शृङ्गारवर्णनादर्शः—

"लहलही ललित लतानिसों गलित ह्वैकें
तो तनसुगंध अलि दौरैं लोभलालची
कहा रति रंभा कहा कमला अचंभा, बात
बसी उरवसी हू न सचीकी प्रभा लचीं ।
सरसुति कहँ दग जेतवार मृगनके
इन्दीवर तमाम इतमाम दालची

स्यामसुखसाधे राधे तेरे हैं अगाधे रूप
जाके मुख आगैं लागै चन्द्रमा मसालची ॥ १० ॥

चंपक चिराक चांदनीनके उजास जीति
अंगछविजालनसौं जगमग भौन भौ
बारनसौं जीते मोर, इन्दु जीत्यो आननसौं
भौंहनि कमान, दृगजीत्यो मृगछौंन भौ ।
कुच जीते चक्र, त्रिवलिनसौं तरंग जीतीं
रोमावलि बरछी, गयंदजीति गौन भौ
रति जीती रूपसौं तरुनतासौं सौति जीती
प्यार जीत्यो प्यारो, लाज जीत्यौ मन मौन भौ ॥ ११ ॥

भरिहाँई देह दुहू भरिहाँ उरोज होत
करिहाँ मनोजबाम भालिनि झुलहियाकैं
सुषमासुछंदजोतिजालनको कंद मुख-
चंद्रिका अमंद चैतचंद्रसौं तुलहियाकैं ।
सहजहूं मंदहंसी, नासा लसी, भौंह कसी
उनपै सनेह मेह अँखियां सुलहियाकैं
ज्यौं ज्यौं सरसात अलिसंगम लहात त्यौं त्यौं
मात उलहात अंग जोबन दुलहियाकैं ॥ १२ ॥”

ऋतुवर्णनायुर्शः—
वर्षाः—

“उमडि अथाह अंबु धारैं धुरवा न ये तो
झंझाकी झकोर झुके झरना झरत हैं
सरसुति कहैं चपलानकी चमाचमी न
चमकति कहियो दिव्य औषधि हिरत हैं ।
टूटि टूटि परत षघूटी व्योममंडल तैं
भिरि भिरि मानिक्के सिखर खिरत हैं,

ओसवारे दामसों पयोनिधिको कोसवारे
पोसवारे पब्बै मेघमिस लै फिरत हैं ॥ १३ ॥
काजरसी कारी घटा उनिआई भारी
भूलि जैहो मगवारी बाट घोर अँधियारीमें
धारपारवारी पहे जमुना करारी, तामें
पार न उतारी कान्ह गोकुल निहारी मैं
छाँह घनवारी ! ये कदम्बबनवारी भरु
तामें पनवारी यास धामधि विचारी मैं
चूनरी हमारी लाल कामरी तिहारी तर
कामरी तिहारी पास छवनाकी झारी मैं ॥ १४ ॥"

हेमन्तः—

"सीतौं भवन झुके परदा रतन द्वार
अगर बगर दीप लियरी सुहाईमें
झीने पसमीनेके बितान भरे झालरिन
मखमली निक्रम गिलम गहराईमें ।
राजें मानप्यारे जहां फूलनकी सेजपर
सरसुति बीन लै अलापैं सुघराईमें
एकछत्रछाईं ऋतुराजकी दुहाईमधि
दुहुन रजाई पाई एक ही रजाई मैं ॥ १५ ॥"

शीतः—

"दिस औ विदिस मिलीं चतुर कुहेलियानि
धुंधरि मचाइ चहूं चित अभिलाख्यो है
सरसुति कहैं पुलकित रोम रोम तन
अंग अंग कंपन सिथिल पहुमाख्यो है ।
सांसनि कढत धूमधारमिस बार बार
हियतें निकारिकें बिरह दूरि नाख्यो है
होइ न कुहेला फागु खेलाकों बसंत संग
सिसिर सहेलाने अबीर उडै राख्यो है ॥ १६ ॥"

दानवीरादर्शः—

"सज्जित तुरंग झलिझंपित मतंग, सुख-
पालकी उतंग सुर्की झालरी मऊरसीं
ललित कलंगी सिरपेच मजु मोती करे
हारतति अच्छरभवलि जयपत्रसीं ।
छाये कवि जाचक जलूस जरीसाज सजि
सरसुति जागीं सिरसोभा छविछत्रसीं
माधवेस कौलौं कहैं रावरेके दान, तुम
ताम्रपत्र दै दै, कीनी दिसी रूपेपत्रसीं ॥ १७ ॥

झूमैं द्वार माते गय, टापटोप ताते हय
ड्योढी चोपदारनसौं दौलतिकै दौर हौं
सरसुति रंग रंग भूषनबसन सजि
बैठ्यो सुखपाल लौं जलेब चहुं ओर हौं ।
सपनोसो दारिद बिलाय गयो छिनही मैं
देख्यो आज माधवेस नैननकी कोर हौं
द्वैकही कवित्त करि याह्मन भुलानो आपु
पूछे घरनीसौं प्यारी वहै हौं कि और हौं ॥ १८ ॥"

वीरवर्णनादर्शः—

"बाड़वकलासी दावानलकी झलासी भुज-
गेसभवलासी रिपुप्रानकी प्यासी है
त्रिजटाजटासी शंभुनैनकी छटासी काल-
रातिकी घटासी, सत्रुकुंजरतरासी है ।
यानीकी बिद्दासी कालीलुलितजिह्वासी, बिक-
राल तेज त्रासी प्रलैरविकी प्रभासी है
बैरिनकौं कासीसी, प्रकासी चंचलासी, कढि
वीरताविलासी सुवपाल असि मासी है ॥ १९ ॥

मंद मंद फैली जाकी कीरतिकलपलता
  सपत प्रताप जिहिं तपनसमानको
धुजत महीप आय सीस धरैं जाकी आन
  मान दान किरवान जीतै मघवानकों ।
कहि कहि नाम जपैं चारोंही वरन जाकों
  चारोंही वरन सरसुतिकवितानको
रघुवरानि छत्रनि मछत्रनि नछत्रपति
  छत्रपति सो है रखवारो हिन्दुवानको ॥ २० ॥"

भर्तृहरेर्वैराग्यशतकानुवादस्य 'वाणीवैराग्यस्य' कानिचित्पद्यानि समूलान्युद्धियन्ते—

यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवं
  तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किञ्चित्किञ्चिद्बुधजनसकाशादवगतं
  तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥
मदअंधर सिन्धुरबन्धु समान जबैं कछुएक हौं जान भयो
  सब जानौं सबै यह मो मनमें कवि बानी कहै अभिमान छयो ।
जब पंडितलोकनपै कुछबोल कछू कछु कोनन मांझ ठयो
  तब मूरख हौं, इहिं भांति चढ्यो ज्वरसो मद जानौं कितैको गयो ॥
नायं ते समयो, रहस्यमधुना निद्राति नाथो, यदि
  स्थित्वा द्रक्ष्यति ते कुप्यति प्रभुरिति द्वारेषु येषां वचः ।
चेतस्तानपहाय याहि भवनं देवस्य विश्वेशितु-
  र्निर्दौवारिकनिर्दयोक्त्यपरुषं निःसीमसौख्यप्रदम् ॥
नाहि समौ तुव हैऽब इकंत, करैं सुख, पैठे न सो सुख देखैं
  बानी कहैं जिन द्वारनपै इन भांति सुने अपमान बिसेखैं ।
रे मन दूरिही छांडी तिन्है सु बिसेसुर देवके भौनहि पेखैं
  जो दरवानिकी निरदै निठुराई रह्यो सुखदाई अलेखैं ॥

१ चतुर्धरणानामाचार्यस्श्रीमाधवेन्द्रस्य कवितास्वपदेशं 'मधुकर' इति नामापि स्थापितं कविना ।

किं कन्दाः कन्दरेभ्यः प्रलयमुपगता निर्झरा वा गिरिभ्यः
प्रध्वस्ता वा तरुभ्यः सरसफलभृतो वल्कलिन्यश्च शाखाः।
वीक्ष्यन्ते यन्मुखानि प्रसभमपगतप्रश्रयाणां खलानां
दु.खोपात्ताल्पवित्तस्मयवशपवनानर्तितभ्रूलतानि॥
कैधौं कंदरनितें बिलाय गये कंद, कैधौं
गिरिनतैं झरने झरत अब रहिगे
बानी कहै कैधौं तरु सरसफलनि भरे
बकल सिकलधरैं डारिधरैं ढहिगे।
दु.खसों सकुचि थोरे धनके गरब, मृदु
पौनमचौं भृकुटीलतानि जे उलहिगे
विनयविहीन खललोगनि मलीन ऐसे
मुखनकों देखन कुलीन जो उमहिगे॥
नाभ्यस्ता भुवि वादिदर्पदमनी विद्या विनीतोचिता
खड्गाग्रैः करिकुम्भपुन्तदलनैर्नाकं न नीतं यशः।
कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये
तारुण्यं गतमेव निष्फलमहो शून्यालये दीपवत्॥
बादीके त्रिजकी कोऊ बिद्या नहिं साधी, पुनि
छायकी न पाई जगजाहिर अमापसौं
बानी कहै करिनके कुमभुक्ताहलनि
भुजसैं लूम न लगाई खगाचापसौं।
कामिनीके कोमल अधरपल्लवहि दाबि
पीयो न पियूष कहू मैनके प्रतापसौं
जोबन दगा दै बिन काज नाहलाज यहै
सूने भौन दिया लौं बिलाय गयो आपसौं॥




एतस्माद्बभूव महिपालमणिमान्यतमः
  श्रीमद्व्रजपालनामतनयो नयोद्भवान्
वाणीकरकङ्कणनिनादतो विवादकरी
  प्रीणयते यस्य पदलहरी परीक्षकान् ।
व्रजनिधिनाम्ना येन चक्रे श्रीप्रतापनृप-
  प्रीतिमनुरुध्य गीतिग्रन्थः स्वररीतिमान्
पोषितप्रतापगुणान् यस्याद्यापि गीतिगणान्
  गुणिजनगोष्ठी किल गायति गुणोज्ज्वलान् ॥ १६ ॥

एतस्मात्, द्वारकानाथमहोदयात् । महिपालमणिभिर्मान्यतमः । नयोद्भवान्, प्रशस्तनययुक्तः । 'प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनी'त्यमरः । माधुर्येण सरस्वतीकरकङ्कणनिनादस्य प्रतिद्वन्द्विनी यस्य (व्रजपालस्य) पदलहरी, गीतिपदलहरी वाग्गुम्फपरीक्षकान् मोदयति । श्रीप्रतापसिंहदेवस्य प्रीतेरनुरोधेन प्रतापभूपतेराराध्यस्य श्रीगोविन्ददेवस्य गुणवर्णनपरः संगीतग्रन्थो येन कृतः । यस्मिन् ग्रन्थे संगीतशास्त्रनियमानुसारं सर्वेषां रागाणां स्वरक्रमोऽपि पृथक् पृथक् निर्दिष्टः । अस्मिन् ग्रन्थे नृत्यस्य, तालानाम्, सर्वेषां च रागाणाम्, तेषां ध्यानस्य, तेषां स्वरक्रमस्य (सरिगम), स्वराणां प्रस्तारस्य, सर्वेषां वाद्यानां स्वरूपस्य, मृदङ्गध्वनेरनुकरणानाम् (परण) अन्येषां च संगीतशास्त्रविषयाणां सविस्तरः संग्रहोऽस्ति । उत्तरखण्डे च श्रीराधागोविन्दगुणगौरवमयी नानाच्छन्दोबन्धुरा अनेकलयानु-

सारिणी गीतिपद्साहस्री वर्तते । एतद्ग्रन्थनिर्माणे अन्येपि गुणिनो गायकाः कवयश्च व्रजपालमहोदयसहकारेण आसन्निति श्रूयते । पोषिताः प्रतापसिंहस्य गुणाः यैस्तान्, गीतिगणान् । तथा च यैर्गीतिगणैरद्यापि प्रतापसिंहदेवस्य गुणः पुष्यतीति भावः । पोषितौ (व्रजपालस्य) कवित्वप्रतापौ गुणश्च यैस्तान् गीतिगणानित्यपि शब्दशक्तिमहिम्ना व्यज्यते । कवितागुणैरुज्ज्वलान् तान् गीतिगणान्, गुणिजनानां गोष्ठी अद्यापि गायति । प्रसिद्धाः किल प्रतापसिंहदेवस्य निर्मिता निर्मापिताश्च गीतय इति नैतत्प्रमाणसापेक्षमिति भावः ॥ १६ ॥

दो०—मुनिशिवदृग्वसुभूमिते वर्षे हर्षयुतेन ।
ग्रामबदरवासो ददे श्रीप्रतापभूपेन ॥ १७ ॥

१८३७ तमे विक्रमसंवत्सरे गुणगौरवसन्तुष्टेन प्रतापसिंहदेवेन पुण्यार्थं (वद्के) बदरवासग्रामो दत्तः ॥ १७ ॥



## चरित्रसंग्रहः



व्रजपालमहोदयस्य श्रीमत्प्रतापसिंहदेवस्य समये राजप्रासादे सुमहान्सम्मादरोऽभवत् । प्रतिसमयं श्रीजयपुरेन्द्रस्तमात्मनः समक्षमेव रक्षति स्म । यथा यथा च श्रीमतः प्रतापसिंहदेवस्य गीतिप्रकारे मनः प्रसज्यति स्म, तेन तेनैव प्रकारेण सोयं गीतीर्विरचयामास । क्रमेण च सोयं सुमहान्संग्रहोऽभवत् । एतद्विषये कवीन्द्रमण्डनेन 'रावलचरित्रकाव्ये' यदुक्तं तदविकलमुद्धरामि—

"तिनके (द्वारकानाथजीके) सुत व्रजपाल हुव काव्यकलनके गेह ।
श्रीप्रतापमहाराजसौं बाढ्यो निस दिन नेह ॥

किय राधागोविन्दके नाम नयो संगीत ।
प्रीति पाय महाराजकी यापि सुरनकी रीत ॥"

एतन्निर्मिता अन्ये ग्रन्था नोपलभ्यन्ते । केवलं महाभारतस्यानुवाद एतत्कृतः साम्प्रतं खण्डश उपलभ्यते ।

एतस्य मुक्तककवितानि यान्युपलभ्यन्ते तेषु 'व्रजपाल' 'व्रजनिधि' इत्युभयविधा मुद्रा दृश्यते । दुर्भाग्यवशादेतस्यान्यान्यपूर्वव्रजदस्यापि कृतिः साम्प्रतमेतद्दृश्यानां सविधे अन्वेषणीयप्रायैव संवृत्ता । गीतीनामादर्शसंग्रहस्य मन्ये न भवेदावश्यकता । संगीतविषयकाणि पद्यानि 'प्रतापसागरे' सुप्रसिद्धान्येव । 'व्रजपाल' 'व्रजनिधि' मुद्राप्रमाणभूतानि एकद्वकवितान्यत्रसन्निदर्शयामि—

"आई ही खिरक मांझ गायके दुहायनको
आय गयो मेह दूरि रहिगो सहरिया
चमकत बिज्जु व्रजपाल अकुलात मन
ऐसो न हि दूजो करै छिनकौ महरिया ।
अबही रँगाइ दीन्ही मांगे बहु दाम देकै
याको है फिकर जामें रंग है गहरिया
तुम सम स्याम नहिं कोऊ हैंहि ओसरमें
तोहीमें बचाय मेरो लीजिये लहरिया ॥१॥"

सेयं वाग्विदग्धाया उक्तिः । अत्र यद् स्वत्वं सहृसिकमहाभागानां सविधे सुस्पष्टमेव ।

अयं हि जयपुरमहीमहेन्द्रस्य श्रीप्रतापसिंहदेवस्य मनोऽभिप्रायानुसारं कवितामारचय्य तस्मै समर्पयामासेति पूर्वमुक्तमेव । एष हि नरेन्द्रो जयपुरभाषायामपि सुमनोहराणि साहित्यसर्वस्वभूतानि पदानि कवितानि च निर्ममौ निर्मापयामास च । तन्मनःप्रसत्तये व्रजलालमहाभागेनापि जयपुरीयनागरिकभाषायां कवितानि निर्मितानि । मन्ये, तेषामेकतमश्च भवेत्पाठकानामवलोकनविषयत्वादुट्टङ्क्यते—

"पनघट घाट ठाठ ठाठ्यो छै उचावाईंको
गैले जाती गोयानें थे किसै काम टोको छो
रसका रसीला गरबीला हुया कांईं फिरो
काम पड्यां कोडै कोडै जाय पग ढोको छो ।
थांको सांणो बाणो प्यारा ! म्हांसे चिनी छानो नहीं
आया छो अवार आंणे थांने दियो कोको छो
व्रजनिधि सांवरा सुण्यां छै गुण बावरा म्हे
नंदका हठीला म्हांको गैलो कांईं रोको छो ॥ २ ॥"




सवै०-

यस्त्वनुजो जगदीशकविः किल दत्तकतामगमत्सुकृती
स हि भागवताद्यनुवादमधाद्व्यदधाद्बहुग्रन्थगणं गणिती ।
यत येन प्रतापनरेशप्रतापकृतौ प्रहिता कवितासुदती
सततं स हि संभ्रियमाणकृती रसवाग् जयताज्जगदीशकृती

यस्तु द्वारकानाथभट्टादनुजः श्रीकृष्णकविकलानिधेस्तनुजः स हि चिमनलालशर्मणो गृहे दत्तकोभूत् । गणिती गणितशास्त्रवेदिता । यद्यपि माधवेशात् ( प्रथमात् ) आरभ्य जगत्सिंहदेवपर्यन्तमस्य कविता प्रवृत्ता, परं प्रधानतया प्रतापसिंहदेवस्य प्रतापसूचिकायां कृतौ ( रचनायां ) येन कवितासुन्दरी प्रेरिता । सततं संभ्रियमाणा संगृह्यमाणा कृतिर्यस्य । रसवाक् सरसवाणीकः स जगदीशकृती जयतात् ॥ १८ ॥

# चरित्रसंग्रहः



एष हि ज्येष्ठभ्रातुः श्रीद्वारकानाथमहोदयादेव चिन्तामणिभट्टः सकलशास्त्राणि कवितां चाधिजगाम। प्रत्येकग्रन्थस्य समाप्तिलेखे लिखत्ययं "ज्येष्ठभ्रातृश्रीद्वारकानाथपट्टशिष्य–चिन्तामणिभट्टोपासक०" इत्यादि। अनेन बहवो ग्रन्था निर्मिताः। प्रायो बहूनां पुराणानां कवित्वसवैयाच्छन्दस्स्वनुवादोऽपि विहितः। संस्कृतकाव्यानामप्यस्य भूयसामनुवादः प्राप्यते। श्रूयते यदस्य हस्तेऽनिशं लेखनी तिष्ठति स्म। गच्छंस्तिष्ठन्नजस्रमयं कवितामयभावेषु विचरति स्म। कवितामारचयन् सोयं न लेखनीं विश्रमयति स्म। छन्दोबद्धा भारती स्वतः प्रावर्तिष्ट। भावान्केवलमयं विचारयति स्म। सेयं प्रसिद्धिः समूलैव। भूयस्तरामस्य ग्रन्थाः सन्ति, एवं सामर्थ्याभावे नैतत्संभवेदित्यूह्यते। दुर्दैवहस्तपतिता एतस्यापि ग्रन्था बहवो लोकैरज्ञापिताः, बहवो नष्टाः, बहवश्च नामशेषाः। परं प्राप्यमाणग्रन्थेषु त इमे सन्ति—

काव्यविनोदः (महाराजपृथ्वीसिंहदेवार्थं विरचितो व्रजभाषामयोऽलङ्कारशास्त्रग्रन्थः, रचनाकालः सं. १८११), किशोरसुरससागरः (राघवगढाधीशस्य किशोरसिंहस्य वचनेन निर्मितो नवरसानां लक्षणोदाहरणैः स्वनिर्मितैरुपबृंहितः, रसानां सम्यगोपाङ्गैः समेतः) जगतरसरञ्जनम् (श्रीमज्जगत्सिंहदेवार्थं विरचितोऽयमपि नवरसानामङ्गोपाङ्गैः समेतः सलक्षणोदाहरणः। रचनाकालः १८६२ सं.) जगतभक्तिविलासः (जगत्सिंहदेवार्थं देवरतिभावमयः सोयं व्रजभाषाग्रन्थो निर्मितः) भक्तिभरगजा, पदमकरन्द, पदपङ्कज, ब्रह्मवैवर्तपुराणस्य दोहाचतुष्पदीच्छन्दःस्वनुवादः, भागवतदशमस्कन्धस्यानुवादः, श्रीवल्लभाचार्यनिर्मितषोडशग्रन्थानामनुवादः, महाभारतस्य वन–

शान्तिपर्वणोऽनुवादः, माघकृतशिशुपालवधस्यानुवादः, भर्तृहरिशतकत्रयस्य कवित्वसवैयाच्छन्दःस्वनुवादः, अमरुशतकस्यानुवादः (कवित्वसवैयाच्छन्दःसु) इत्यादि।

एतस्य कवितायाः केचिदादर्शाः पाठकानां पुरस्तादुपस्थाप्यन्ते—

"जेवर जराऊ हेमहंसक धराऊ आछे,
किंकिनीके नीके नग नग सो सुहात हैं
सोहे मुंगमाल गुंजमाल वैजयन्तीमाल
पुहुंची रसाल लाल बाजू दरसात हैं।
पीतपट बांधें बंसीनाद सुर साधें कहौं
कौलौं जगदीस जे गुविन्द छबि गात है
सीसपर ऐसें छहरात मोरचंद्र मानौं
आनँदके मंदिरमें धुजा फहरात है ॥ १ ॥"

जयपुरनरेन्द्रहर्म्यमालायां श्रावणतृतीयामहोत्सवः—

"एकै भांति भूषन बसन खास लोगनकें
बिना छत्र चौंर पते भूप को पिछानतो
चलत हवाई के तनत तारे अम्बरतें
उलटि न आवते तौ तारे कौन मानतो।
तीजको सौहार जयनगर नरेस सोम
बिन बरदान कबि कैसें के बखानतो
गोरियांके सीसपै न होतीं गनगोरियां तौ
गोरियांके बीच गनगोरियां को जानतो ॥ २ ॥
उतै भूरि बादर हैं बादर महल इतै
चंचला उतैको इतै कंचनियां लाखी हैं
जिंगन जमात उतै दीपनकी पांति इतै
गरज उतैकों इतै नौबतियां भाखी हैं।
उतै सांझफूली इतै रंगरुली सभा सोम
कवि जगदीस मलिमारयि यों भाखी है

उतै इन्द्र, राजै इतै महेन्द्र श्रीप्रतापभूप
अद्भुत तीजकी जलूस रचि राखी है ॥ ३ ॥"

गजवर्णनादर्शः—

"वज्रसम सीस टक्करनिसों सहजही सों
ढेर करि डारें रिपुकोट गढ छनमें
जिनकी गराज सुनि लाजत दिसाके पील
डीलके उतंग हैं अडिग्ग महारनमें ।
ऐसे गजराज महाराज माधयेस तेरे
कहै जगदीस जोम राखें रहें मनमें
पुंही हेत आपुस विरोधिनहू एक कीये
आंखिनमें तेज राखें सम राखें तनमें ॥ ४ ॥
सक्रपुरद्वारनिकों पारें सीसटक्करनि
सुंडनि उखारें घन नंदनके तर हैं
कहैं जगदीस गंडमंडित अँवरगाम
झरियो करत मद आठ हू पहर हैं ।
इलत धरनि अति चलत जबे जे नेंक
गज्ज सुनि दिग्गज करत थरथर हैं
साजें अंग आभूषन काजें जंगजीतनके
राजें माधयेसजूके ऐसे गजवर हैं ॥५॥"

हयवर्णनादर्शः—

"मधुकरराज राजें ऐसे दान तुंग तुरी
तुरकी औ ताजी तेजी अबलख लासनाम
कलित कनककाठी घटित धनात जीन
एलत रकेंबें मन, ललित लसें लगाम ।
कहैं जगदीस ऊंचे डीलनके पीलन से
अरज करें आपप्तसों सातद्वय तेजधाम

चाबुक न लागै कहूं हमसे अवीन हूकै
चौंकतसे रहैं यातें मान हुं असेस जाम ॥ ६ ॥

पौन मन कैसें धौं लगाइये लवे को, जिन
दूरही रहत जव जलनिधि याज ते
धैं जरदोजी जीन मीननके पाइरेन
चक्कत खलीन रविहय छोह छाजते ।
कहैं जगदीस दीहदानके प्रबंधनमें
देत महाराज माधवेस वाजिराज से
लोक सब लंघनके लायक ही होते, जो पै
करत करत विधिभुज सैं न भाजते ॥ ७ ॥"

शृङ्गारवर्णनादर्शः—

"कुंजनिकी गैल मिली छैल नंदनंदनकों
कुंदनसे अंग छिन एक दरसै गई
कवि जगदीस चैतचंदसो दिखाय मुख
तममें अतम बेदना कों अति कै गई ।
मंद मंद मदके गयंद जैसी चाल चलि
करिकें निहाल नेह बीजनकों वै गई
मृदु मुसक्याइ रसबातनि सुनाइ नारि
तिरछी निहारि बरछीसी उर दै गई ॥ ८ ॥

चहूं ओर छाये छिति छोरन लौं जोर घन
पवन झकोर घोर गाजति घमकि घमकि
कवि जगदीस कहैं मोरनके सोर मांचे
चख चकचौंधी देत चपला चमकि चमकि ।
ऐसे समै राधेके महल तैं धनस्याम
छाडे सुख लेत रूपरंगनि रमकि रमकि

झाकति झरोखें प्यारी झुकि झुकि रुकि रुकि
झमकि झवीति देह दुतिसों दमकि दमकि ॥ ९ ॥

सारद सुधाकरकी फैली चहू चांदनी है
पास लै चकोरनि चकोरी सुधा चाखैं सी
ऐसे समैं चारु दासी संग लिये सारदा सी
चलिकें चली है प्यारी अंग अभिलाखैं सी ।
कहि जगदीस आइ ऊपरके खड देखि
सुमनकी सेज सूनी सब सुख नाखैं सी
जोहि रही जकि थकि आनन सहेलिनको
होइ रही खजन सी आंखैं बिन पांखैं सी ॥ १० ॥"

ऋतुवर्णनावशे —

"नरतिकी कहा चली तरनि अताप तप
दरनिमें दुके सिंह चिरिमचे चेटेसे
ऐसे समै राधिका गुविंद राजैं कुंजनमें
एटा फुँहारे भम असमान भेदे से ।
सुसके सुनत राग रसके अतर लाग
रसचे कवित्त पढ़ें जगदीस जेटे से
अलिगुज भेदे जुही झाकरिलपेटे, होत
पवन झपेटे देत ग्रीखम चपेटे से ॥ ११ ॥"

अमरुशतकानुवादात्कानिचित्पद्यानि समुद्ध्रियन्ते—

एव मुग्धाक्षि विनेय कञ्चुलिकया धारो मनोहारिणी
एदमीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।
शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजन ॥

सवै०—प्यारी तुम्हें बिन कचुकी ही छवि आछी लगै कत अंग ढपैयो
यों कहि प्यारेनें नीवी गही सब आपसमें चितैई अब जैयो ।

आंहि तो बाल कहे जिन जाहु, न जांहि तौ पीतम नैन रिसैबो
काहू कह्यो गिरी बांधिबो, काहू कह्यो मुहि सूवहि भोजन दैबो॥१२॥

कृतो दूरादेव स्मितमधुरमभ्युद्गमविधिः
शिरस्याज्ञा न्यस्ता प्रतिवचनमुच्चैः प्रणमितम् ।
न दृष्टेः शैथिल्यं मिलन इति चेतो दहति मे
निगूढान्तःकोपात्कठिनहृदये संवृतिरियम् ॥
आवतमें दूरही सों हास सों मनोहर है
चारिक चरन भरि साम्हें कियो आवनो
कवि जगदीस मैं कह्यो सो आनि सीस धरि
नीचें होइ उतरको देति उरझावनों ।
मिलिबेमें तेरी डीठि ढीली नांहि होत यहै
करत है मेरे महा चित्तको सचावनो
मनकों कठोरधारी एरी गोप कोपवारी
सीखी कौनसों है यह अंतर छिपावनो ॥ १३ ॥

एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो–
रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।
दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो–
र्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः ॥
एकै सेजपर मुख मोर करि मौंन लीने
दोउनके मनमें महाई खेद छयो है
आपसमें दोऊ ही मनावन चहत तौहू
आपनी बडाई पालिवेमें मन ठयो है ।
कवि जगदीस कहै चलिकें कटाच्छ धीरैं
दंपतिदृगनको मिलाव होइ गयो है
हासहि सहित ग्रीव गहि तदुवाहन सों
प्रीति कोपकलह दुहूंनि दूरि भयो है ॥ १४ ॥

अथ कविरवपरिचयम् आनायि प्रापित । महिम्ना अतुलैरनुपमैः । अस्य काव्यनिर्माणस्य, तत्त्व समदायि दत्त प्रबोधितमित्यर्थः ॥ ८१ ॥

क०—भारतमार्तण्डशिष्यवर्यान् प्राच्यचर्याचणान्
वेद्मि बहुविज्ञान् पुष्टिमार्गेऽधुना धन्येऽहं
शीघ्रकव्युपाधिमाननीयान् शब्दशय्याशालि-
प्रौढरचनायामद्वितीयानद्य मन्येऽहम् ।
मञ्जुनाथमातुलानमायवत्सलानपि तान्
जाने नयनिस्तुलान् निबन्धे जातिजन्येऽहं
मर्यादानुसारि–सांप्रदायिकसपर्यान् सदा
श्रीनन्दकिशोरशास्त्रिवर्यान् बहु मन्येहम् ॥ ८२ ॥

सहस्रावधानिप्रवर–भारतमार्तण्डपञ्चनदीश्रीगोवर्द्धनशर्माण (प गट्टू लालजीति प्रसिद्धा ) तैलङ्गा कच्छप्रान्ते ( १९०१ तमे विक्रमाब्दे ) जन्म लेभिरे । एते हि जन्मान्धा अपि अतिबुद्धिमन्तोऽलौकिकविद्यानिधयोऽभूवन् । शतावधान साधयित्वा क्रमेण सहस्रावधानपर्यन्तमिमे चक्रिरे । एतेषामलौकिकपाण्डित्यसन्तुष्टै काशीकलकत्तादिनागरपण्डितै वेदान्तभट्टाचार्य-भारतमार्तण्ड शीघ्रकवि प्रभृतय उपाधयो ददिरे । एतेषामद्यावधिप्रकाशिता ग्रन्था —भारतशक्ति (प्राभञ्जनस्य टीका) स सिद्धान्तमार्तण्ड –वेदान्त चिन्तामणि, कृष्णाभिसार । अप्रकाशितास्तु उपनिषद्भाष्याणि शुद्धाद्वैत-चन्द्रोदयप्रभृतय । एतेषामेव महाभागानामिमे प्रधानशिष्या । भक्ति नौकां प्रदाय जीवाना ससारसागरतारकतया धन्ये, पुष्टिमार्गे वल्लभाचार्य-प्रचारितवैष्णवसम्प्रदाये । एतेषा रचना, प्रतिषण्मास नाथद्वारस्थतिलका-यितगोस्वामिनो तत्सुतानां च जन्मोत्सवसमये मार्मिकाणा विदुषा हृदयमा-नन्दयति। प्रचार्यते वेभि (टिप्पणी) ति प्रसिद्धमुत्सवदिवससूचक पञ्चाङ्ग नाथद्वारात् । इमे तत्रत्यगोस्वामितिलकत यानपाठयन्, साम्प्रत तत्र 'विद्या विभागे'ऽधिष्ठिता सन्ति । अमाय निर्व्याज वत्सलान् । जातिजनिते निबन्धे

('द्वैविध्ये 'तङ') नयनिरतुलान् नीतौ निरुपमान् । वल्लभसंप्रदायप्रसिद्धा या मर्यादा धार्मिकपद्धतिस्तदनुसारिणी सपर्या सेवा येषां तान् । तथा च मथुरायां 'श्रीनाथजीकी बैठक' इति प्रसिद्धं श्रीनाथमन्दिरं, तत्रत्या सेवा धानेन सूच्यते । इमेऽपि विंशतिपरिमितान्यवधानानि चक्रुः । तत्कालं समस्यादिपूर्त्या 'शीघ्रकविः' इत्युपाधिभिमे प्रलक्षयन्ति ॥ ८२ ॥

सो०—तत्साहाय्यमवाप्य, विद्यायामिव बहुविधे ।
व्यवहारेऽप्ययमाप, लब्धुं परिचयमवसरम् ॥ ८३ ॥

तेषां नन्दकिशोरशास्त्रिणां साहाय्यं प्राप्य, विद्यायामिव बहुविधे व्यवहारेपि परिचयं लब्धुमवसरं प्रापेति योजना ॥ ८३ ॥

दो०—भाग्यं बुद्धिमथावसरमासाद्य प्रयतेन ।
शनैः शनैः खण्डितमहो ऋणजालं तदनेन ॥ ८४ ॥

अवसरं अनुकूलं कालम् । प्रयतेन प्रयत्नतत्परेण । तद् ऋणजालम्, अनेन (मथुरानाथेन) खण्डितम् समापितम् ॥ ८४ ॥

मातुलादिसंबन्धिनामन्येषां च ऋणानि ।
पितामहानुग्रहवशात्सर्वाण्यपि दलितानि ॥ ८५ ॥
यथाक्रमं निजमतिबलादायसमृद्धिरकारि ।
स्वजनेष्वथ कोविदगणे गौरवमपि समचारि ॥ ८६ ॥

आयस्य समृद्धिः कृता । स्वजनेषु जातिसमाजे, कोविदगणे विद्वन्मण्डले च, गौरवं प्रतिष्ठा समचारि स्थापिता ॥ ८६ ॥

पारम्परिकं जीर्णगृहमामूलाच्चिरमायि ।
परःसहस्रै रूप्यकैरन्यद् गृहमक्रायि ॥ ८७ ॥

अन्यद् 'नागरपाड़ास्थं गृहम्' क्रीतम् ॥ ८७ ॥

एवं शनकैरात्मपद–गौरवगुणोचितानि ।
साधनानि सर्वाण्यहो सम्यक् संघटितानि ॥ ८८ ॥

आत्मनः स्थानस्य, प्रतिष्ठायाश्चोचितानि । संघटितानि आयोजितानि ॥८८॥

सम्प्रति गुणगौरवविदो विज्ञाः स्नेहमयन्ति ।
उच्चराजकीया जना विनयाद्वरिवस्यन्ति ॥ ८९ ॥

राजकीया उच्चपदाधिकारिणः । वरिवस्यन्ति सत्कुर्वन्ति ॥ ८९ ॥

कुटिलोपि च बहिरभिनयन्विनयं संमुखमेति ।
ध्रुवमिदमनुकूले विधौ सर्वं सहजमुदेति ॥ ९० ॥

अन्तः कुटिलोपि बहिर्विनयमभिनयन् नाटयन्संमुखमेति । अनेन विधेरानुकूल्यं सूच्यते ॥ ९० ॥

सहृदयसुजनसहायतामाप्य मतिं स दधार ।
नवहिन्दीसाहित्यवरविद्यालयं बभार ॥ ९१ ॥

आ-आप्य, आङ्पूर्वकादाप्नोतेर्ल्यप् । नवहिन्दीसाहित्य०—'हिन्दीसाहित्याग्रिपाठशाला'नामको हिन्दीविद्यालय आङ्ग्लविद्यालयस्य समीप एव वर्वर्ति । अत्र हि हिन्दीसाहित्यसंमेलनतो नियमितानां 'प्रथमा-मध्यमा-उत्तमा-'परीक्षाणां ग्रन्था नियमानुसारं पाठ्यन्ते । दशाधिका अध्यापका अत्र प्रेम्णाऽध्यापयन्ति । तेषु बहव एवावैतनिकाः । वर्षद्वयाज्जयपुरराज्यतोऽस्य शिक्षाविभागद्वारा चत्वारिंशन्मुद्राः प्रतिमासमार्थिकसाहाय्यं सम्प्रप्तम् । एतद्ग्रन्थकर्त्रा परिचालितेन 'कविमण्डलेन' सोयं विद्यालयः पूर्वं प्रतिष्ठापित इति दिक् ॥ ९१ ॥

सो०–प्राकृतलोकसुखाय, यस्या रसपाकोऽभवत् ।
संस्कृतपथं निनाय, गाथासप्तशतीं स ताम् ॥ ९२ ॥

प्राकृतभाषानुरागिणां लोकानां सुखाय यस्या रसपाकोऽभवत्तां हालकृतां गाथासप्तशतीं संस्कृतपथं संस्कृताया भाषायाः मार्गं प्रापयामास । समश्लोकानुवादेन तां संस्कृतमार्गं आनिनायेति भावः । अत्र प्राकृतानां साधारणानां जनानां रसनीयां सप्तशतीं, संस्कारसंस्कृतानां नागरिकाणामुपभोग्यां

चक्रे इदमपि शब्दशक्त्या सूच्यते, तेन च संस्कृतभाषाया अपूर्वोत्कर्षप्रदायकत्वमभिव्यज्यते ॥ ९२ ॥

स हि संस्कृतभाषागहनतत्त्वाविष्करणाय ।
यद्यत् किञ्चन चरति तद्विदितं स्वादनाय ॥ ९३ ॥
अथवा कृतवान् किं न किं, ? करुणां योऽधिजगाम ।
मण्डनकुलतन्तुः स किल जगन्नियन्तुर्नाम ॥ ९४ ॥

यो मण्डनकुलतन्तु जगन्नियन्तु करुणामधिजगाम, स किं किं वा न कृतवानिति योजना । तद्विस्तरस्त्वग्रे ॥ ९४ ॥

क०—पञ्चनदविश्वविद्यापीठे सर्वमूर्द्धपदं
चरमपरीक्षार्थिषु सोयं समवाप्तवान्
जयपुरराजकीयशिक्षाप्रविभागादथो
व्याकरणे शास्त्रिपदमेष परिलब्धवान् ।
साहित्येपि लेभे क्रमादेष किलाचार्यपदं
रत्नाकरमुत्प्रमदं सोयं संप्रथितवान्
शास्त्रमर्म शीलितवान्, वाग्मिनः प्रकीलितवान्,
वाचमथोन्मीलितवान्, किं वा न कलितवान् ९५

पञ्चनदविश्वविद्यालये चरमपरीक्षार्थिषु ( शास्त्रिपरीक्षार्थिषु ) सर्वप्रथमस्थानम् ( First in whole University )। 'संस्कृतरत्नाकर'नामकसंस्कृतमासिकपत्रं महामहोपाध्याय प० गिरिधरशर्मचतुर्वेदेन एतद्ग्रन्थकर्त्रा चोभाभ्यां दशवर्षपर्यन्तं सम्यक् सम्पाद्यते स्म जयपुरात् । तदिदानीं कति पयवर्षेभ्य प्रतिरुद्धम् । उत्प्रमदं यथा स्यात्तथा प्रकाशितवान् । वाचं कवितामयीं वाणीं प्रकटितवान् ॥ ९५ ॥

दो०—राजाङ्गलविद्यालयाध्यापकपदमयमाप्य ।
माद्यति मानमहीपतेश्छत्रच्छायमवाप्य ॥ ९६ ॥

जयपुरराजकीय'महाराजास् कॉलेज' इत्यस्य संस्कृतप्रोफेसरपदम् आ-आप्य । छत्रस्य छाया इति छत्रच्छायम् 'विभाषा सेनासुरेति' क्लीबत्वम् । माद्यति, संतोषेण प्रसीदति । 'मौज' इति भाषायाम् ॥ ९६ ॥

यः किल मण्डनकुलगृहं व्यभजद्विलसद्धस्ति ।
मञ्जुनाथनामा सपदि सोयं संमुखमस्ति ॥ ९७ ॥

विलसन् हस्ती यस्मिन् तत्, ईदृशं मण्डनकुलगृहमाश्रयत् । अनेन मण्डन-कवीन्द्रस्य तादृङ्महिमशालित्वमात्मनश्च तत्स्थाने स्थितस्यापि अतादृशत्वं सूच्यते ॥ ९७ ॥

कविजनरङ्गान्निर्भरं मनस्तरङ्गाद्वापि ।
अपटु ग्रथितं यत्किमपि, तद्वोऽभिमुखमवापि ॥ ९८ ॥

कविजनानां रङ्गात् अनुरागजनितादभ्यासात् । अपटु अप्रौढमसुन्दरमिति यावत् । ग्रथितं यथाकथञ्चिद् गुम्फितम् (गांठना इति भाषायाम् । अनेनात्मनोऽशक्तिं प्रकाश्य विनयः सूच्यते ।) वः युष्माकम् । अवापि प्रापितम् ॥ ९८ ॥

मध्यममुत्तममधममिति सन्तस्तद्विमृशन्तु ।
मनोमात्रवेद्येष्वपि च के वाचं नटयन्तु ॥ ९९ ॥

विमृशन्तु समीक्षन्ताम् । मानसमात्रैकवेद्येषु कवित्वगुणपरीक्षादिषु, विषयेष्वपि, वाचं के नटीं कुर्वन्तु ? यं विषयं मन एव बोद्धुं पारयेत्तत्र वाचा कथनेन किं गौरवमिति भावः । 'न हि कस्तूरिकाऽऽमोदः शपथेन विभाव्यते' ॥ ९९ ॥

सत्तु किमहमाम्रेडये गिरं कालिदासस्य ? ।
'वह्नौ सिध्यति शुद्धता श्यामिकापि कनकस्य' ॥१००॥

आम्रेडये द्विवारमावर्तयामि । 'हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा' ॥ १०० ॥

समाप्तः ।